# उदाहारः ।



" ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति " महामतेर्महानुभावस्य महतो मुनिमूर्धमुकुटमणेर्महीमण्डलमण्डनस्य महर्षिवर्यस्य महाशयस्य पतञ्जलेरनुशासनात् षडङ्गेषु छन्दोऽभिधानाच्छिक्षायां " छन्दः पादौ तु वेदस्य " इति पादरूपेण निरूपणाद्वेदस्य पादरूपमेकमङ्गं छन्दोऽस्ति । छन्दसैव समस्त व्याप्तमिदं वाङ्मयं छन्दसैव निगमागमानां प्राचीनार्वाचीनाचार्यनिर्मितोत्तमोत्तमनिबन्धनिकराणां भवति सञ्चालनं तेन विना तेषां सञ्चालनाभावश्च संभाव्यते । दृश्यते खलु जगति जनता प्रचलति पद्भ्यां न तद्धीनेति प्रत्यक्षम् । तदिदं वेदाङ्गत्वाच्चतुर्दशविद्यान्तर्गतत्वाद्विष्णुरिव सर्वव्यापकत्वात्तदपरिज्ञाने प्रत्यवायश्रवणाच्चाध्येयं ज्ञेयमवश्यञ्चेति । श्रीमता विद्वद्वत्सलेन कव्युपकारमातेना पिङ्गलाचार्येणापि छन्दोज्ञानार्थमेव सूत्रात्मकमष्टभिरध्यायैः प्रणीतं " छन्दःशास्त्रम् " । तत्र सर्वेषां वैदिकानां लौकिकानाञ्च छन्दसां सम्यक्तया सूत्रैरेव निरूपणमस्ति तदेव छन्दोग्रन्थेष्वार्षत्वान्मेध्यं वेद्यं श्लाघ्यं प्रधानञ्च । " प्रधाने च कृतो यत्नः फलवान् भवति " इति सत्सिद्धान्तत्वेऽपि तत्काठिन्यं दृष्ट्वा प्रथमतस्तदध्ययनोत्सुकानां वृत्तजिज्ञासूनां विद्यार्थिगणानां कुण्ठिता धीश्चेत्तर्हि ते विगतमनोरथा भविष्यन्त्यतो लौकिकच्छन्दसां ज्ञानानन्तरमेव प्राप्तबोधानां तदध्ययनं श्रेयस्करमिति मत्वा परमकारुणिकेन श्रीकेदारभट्टेन विरचितमिदं " वृत्तरत्नाकरम् " । मयाप्यस्योपरि " छन्दःसुबोधिनी " नाम्नी संस्कृतटीका " सरला " नाम्नी च भाषाटीका ह्येव द्वे टीके रचिते स्तः । प्रदर्शितानि च समस्तवृत्तोदाहरणान्यतः स्वल्पबोधवतामपि पुंसामेतदध्ययनेन लौकिकानामस्मिन्नुक्तानां सर्वेषां मात्राच्छन्दसां वर्णच्छन्दसां च सम्यग् ज्ञानं भविष्यतीति निश्चितम्, तस्मात् सर्वैस्सज्जनैः काव्यरसिकैः कविभिश्चेदं स्वीकर्तव्यमित्याशास्महे । यच्चात्र मद्रचितटीकोल्लेखे भ्रमप्रमादांशश्चेत् सकृपालुभिः कविभिस्संशोधनीयः, सुप्रसिद्धमपि " धावतः स्खलनं न दोषाय भवति' । अस्य छन्दोग्रन्थस्य सर्वदा सर्वथा मुद्रणादिविषयकाः सर्वाधिकाराः मुम्बईस्थ **खेमराज श्रीकृष्णदास** श्रीवेंकटेश्वर ( स्टीम् ) यंत्रालयाध्यक्षाभ्यां महानुभावाभ्यां रावसाहब श्री**रंगनाथ–श्रीनिवासाभ्यां** समर्पिताः । इति ।

भवदीयः–

**दाधीचपण्डित ज्ञारसरामशर्म्मा, कामठीस्थः ।**

श्रीगणेशाय नमः ।

# वृत्तरत्नाकरविषयानुक्रमणिका ।



इति विषयानुक्रमणिका समाप्ता ।

॥ श्रीगणेशाय नमः ॥

# अथ वृत्तरत्नाकरः ।

## टीकाद्वयोपेतः ॥

## प्रथमोऽध्यायः ।



सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्च्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १ ॥
वेदार्थशैवशास्त्रज्ञः पव्वैकोऽभूद्द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥ २ ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ ३ ॥

### छन्दःसुबोधिनीटीका ।

नत्वोमेशं च मेशं च देवीं पीताम्बरां वराम् ।
कुर्वे ज्ञानरामोऽहं टीकां छन्दःसुबोधिनीम् ॥
भाषायां सरलां चान्यां वृत्तरत्नाकरस्य वै ।
उदाहरणसंयुक्तां बालबोधाय सन्मुदे ॥

“ माङ्गलिक आचार्यो महतश्शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च अध्येतारश्च सिद्धार्था यथा स्युः ” इत्यमलमतेर्भगवतः पतञ्जलेरनुशासनाच्छिष्टसम्मतत्वाच्च प्रारीप्सितग्रन्थस्य निर्विघ्नसमाप्तये शिष्यशिक्षायै च स्वकृतवृत्तरत्नाकरस्यादौ श्रीकेदारभट्टकविः शिवनमस्कारात्मकं मङ्गलमाततान--**सुखेति** । तेन केदारेण इदं छन्दः[२] क्रियते । क्रियमाणस्य करिष्यमाणस्यापि छन्दसो धीस्थत्वादिदमिति निर्देशः। प्रज्ञास्थमिद क्रियत इति तृतीयश्लोकेनान्वयः । किं कृत्वा शङ्करं--शं कल्याणं करोतीति शङ्करो महादेवस्तं शिवम् । नत्वा—नमस्कृत्य ।

१ कुत्रचित् पव्वैक पाठः। २ छन्दोग्रन्थ ।

किमर्थं सुखसन्तानसिद्ध्यर्थं—सुखसंतानस्य सुखसमूहस्य सिद्ध्यर्थमिति भावः। यद्वा सुखं त्रिविधदुःखात्यन्तनिवृत्तिरूपम्, संतानः पुत्रपौत्रादिरूपः, सिद्धयोऽष्टसिद्धयस्तदर्थम्। किंविशिष्टं शङ्करम्? लोकशंकरं—लोकानां मङ्गलकर्तारं किमुत भक्तानामिति लोकमङ्गलकर्तुर्ग्रन्थादावभिवादनात्मकमङ्गलमुचितमेव। पुनः किंविशिष्टम्, ब्रह्माच्युतार्चितं—विधिविष्णुभ्यामर्चितं पूजितं सत्कृतमित्यर्थः। शिवविष्णुब्रह्मणामेकरूपेणैव कैवल्योपनिषदि निरूपणाच्छिवनमस्कारेण तावपि वन्दितौ स्तः। एतेन त्रयाणामैकात्म्यं सूचितम्। प्रमाणमपि "स ब्रह्मा स विष्णुः स रुद्रस्स शिवः सोऽक्षरः स परमः स्वराट्" इति। पुनः किंविशिष्टम्? गौरीविनायकोपेतम्—गौरी पार्वती विनायको गणेशश्च ताभ्यामुपेतं सहितम्। ताभ्यां सहितत्वात्तद्वन्दनेन तयोरप्यभिवन्दनमतो न पृथङ् नमस्कृतिरिति भावः ॥ १ ॥ तेन केनेत्याशङ्कायाम् यस्तस्य पुत्रः शिवपादार्चने—शिवस्य शम्भोः पादयोरर्चनं पूजनं शिवपादार्चनं तस्मिन् रतोऽनुरक्तः केदारोऽस्ति तेनेत्यर्थः। तस्य कस्य पुत्र इत्यपेक्षायां पव्वेकः—पव्वेकनामा। द्विजोत्तमः—द्विजानामुत्तमो ब्राह्मणः पण्डितविप्रोऽभूत्तस्य पुत्र इति योजनीयः। किंविशिष्टः? वेदार्थशैवशास्त्रज्ञः—वेदानामर्थो वेदार्थः. वेदार्थश्च शैवशास्त्रञ्च वेदार्थशैवशास्त्रे वेदार्थशैवशास्त्रे जानातीति वेदार्थशैवशास्त्रज्ञः। केदारस्यापीदं विशेषणं वा भवति गौणम् ॥ २ ॥ किंविशिष्टं छन्दः? लक्ष्यलक्षणसंयुतम्—लक्ष्यमुपदेश्यमार्यादिकम्, लक्षणं तत्प्रतिपादकवचनम्। यथा "लक्ष्मैतत्सप्तगणा गोपेताः" इत्यादयः। लक्ष्यञ्च लक्षणञ्च लक्ष्यलक्षणे लक्ष्यलक्षणाभ्यां संयुतं युक्तं लक्ष्यलक्षणसंयुतम्। "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः। एकमेव पद्यं लक्ष्यं लक्षणञ्चैतेन लक्षणरूपेभ्योऽन्यग्रन्थेभ्यः श्रेष्ठत्वादुभयात्मकस्यैवास्योपादेयत्वं सूचितम्। नाम—नामधेयं तु। वृत्तरत्नाकरम्—वृत्तान्येव रत्नानि वृत्तरत्नानि वृत्तरत्नानामाकरं "**वृत्तरत्नाकरम्**" छन्दोरत्नोत्पत्तिस्थानमित्यर्थः। प्रयोजनं किमिति चेत्तदाह—बालानां सुखसिद्धये—बालानामल्पमतीनामपठितछन्दःशास्त्राणां सुखेन—स्वल्पायासेन सिद्धये व्युत्पत्तये। सुखवृद्धये क्वचित्पाठः ॥ ३ ॥

## भाषाटीका सरला।

आरंभित ग्रंथकी निर्विघ्न समाप्ति और शिष्यशिक्षाके लिये ग्रंथकर्ता केदारभट्टने श्रीशङ्कर—नमस्कारात्मक मङ्गल किया है।

श्लोकार्थ–सुख समूहकी सिद्धिके लिये ब्रह्मा और विष्णुसे पूजित, पार्वती और गणपतिसे युक्त जगत्के कल्याणकर्ता महादेवजीको नमन करके ॥ १ ॥ वेदोंके अर्थ और शैवशास्त्रोंको जाननेवाले पव्वा नामक ब्राह्मणके केदारभट्ट नामका शिवभक्त पुत्र हुआ ॥ २ ॥ उन केदारभट्टजी करके लक्ष्य ( उदाहरण ) और लक्षण ( छन्दोंके बनानेकी क्रिया ) वाला यह वृत्तरत्नाकर नामका छन्दोग्रन्थ बालको [ छन्दशास्त्रके न जाननेवालों ] के सुखसिद्धि ( स्वल्पपरिश्रमसे जानने ) के लिये किया जाता है ॥ ३ ॥

पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥
षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥

छ० टी०–नन्वत्र तृतीयश्लोके तेन केदारेण इद छन्दः क्रियत इति कथनान्निखिलच्छन्दसा करण सिद्धम् । इह तु वैदिकच्छन्दसामनभिधानात् प्रतिपाद्यप्रतिज्ञाभङ्गदोषापत्तिस्स्यादित्याशङ्कायामाह–पिङ्गलेति । पिङ्गलादिभिराचार्यैः पिङ्गलकश्यपसैतवैः यन्मात्रावर्णविभेदेन–मात्रावर्णयोर्विभेदेन । द्विधा–द्विप्रकारकम् । "सख्याया विधार्थे धा (५ । ३ । ४२)" उक्त तल्लौकिकम्–लोके भव लौकिक छन्द इहात्र कथ्यते न तु तद्वैदिकमतो न प्रतिज्ञाभङ्गदोषापत्तिः ॥४॥ अस्यच्छदसः–वृत्तरत्नाकरच्छदोग्रन्थस्य । षट्त्रिशदधिक शत प्रमाणमपि परिस्फुटम्–परि समन्तात् स्फुटं प्रकट विशदं स्पष्टम् । विज्ञेय–ज्ञातव्यम् । किंविशिष्टस्य छंदसः? षडध्यायनिबद्धस्य–षट् च तेऽध्यायाश्च षडध्याया॰ षडध्यायैर्निबद्धं षडध्यायनिबद्धं तस्य । अत्राप्यभिव्याप्तावतस्सकलग्रन्थस्यास्यानुष्टुप्श्लोकसंख्ययेदं प्रमाणं बोध्यम् । ग्रन्थश्लोकप्रमाणगणनायामनुष्टुप्श्लोकसख्ययैव परिगणनं भवतीति लोकप्रसिद्धमस्ति ॥ ५ ॥ लान्तैर्लश्वन्तैर्म्यरस्तजभ्नगै.–म. य. र स त ज भ न ग लै. मगण ऽऽऽ, यगण ।ऽऽ, रगण ऽ।ऽ, सगण ।।ऽ, तगण ऽऽ।, जगण ।ऽ।, भगण ऽ।।, नगण ।।।, एवमष्टभिर्गणैः सह गुरुलघ्वक्षरौ मिलित्वा एभिर्दशभिरक्षरैः दशसंख्याकैर्वर्णैः । समस्तमशेषं वाङ्मय वाग्जाल व्याप्तम् । केन किमिव ? विष्णुना नारायणेन त्रैलोक्यमिव । म्यरस्तेत्येकदेशोऽत्र लाघवार्थमस्त्यग्रेऽप्येवं ज्ञेयम् ॥ ६ ॥

भा० टी०-पिङ्गल आदि आचार्यों करके मात्रा और वर्ण छन्दोके भेदसे जो दो प्रकारके लौकिक छन्द वर्णन किये हैं, वे ही दोनों प्रकारके छन्द इस ग्रन्थमें कहे जातेहैं ॥ ४ ॥ छः अध्यायोंसे रचित इस वृत्तरत्नाकर ग्रन्थकी श्लोकसंख्या १२६ हैं, यहां श्लोकोंकी संख्या अनुष्टुप् छन्दसे जानिये ॥ ५ ॥ विष्णुसे जिस प्रकार त्रिलोकी व्याप्त है, उसी प्रकार मगण, यगण, रगण, सगण, तगण, भगण, जगण, नगण गुरु और लघु इन १० अक्षरोंसे समस्त वाणीमयी जाल व्याप्त है ॥ ६ ॥

**सर्वगुर्मो मुखांतलौं यरावन्तगलौ सतौ ।**
**ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥**

छ० टी०-अथ मगणाद्यष्टानां स लक्षणसञ्ज्ञामाह । अत्रास्मिन् ग्रन्थेऽष्टावेव गणा भवन्ति न्यूनाधिकाश्च नेति । किंविशिष्टा गणाः । त्रिकाः--त्रयोऽवयवाः परिमाणं येषां ते त्रिकाः ( सङ्ख्यायामवयवे कः ) सर्वगुः--सर्वे गवो गुरवो यत्र स सर्वगुः उच्चारणार्थोऽत्रोकारः । मः १ मगणस्त्रिगुरुरित्यर्थः ऽऽऽ, मुखान्तलौं--मुखे आदौ अन्तर्मध्ये लो लघुर्ययोस्तौ मुखान्तलौं । यरौ--यश्च रश्च यरौ यगणरगणौ आदिलघुर्यः २ यगणः ।ऽऽ, मध्यलघुश्च रः ३ रगणः ऽ।ऽ, अन्तगलौ--गश्च लश्च गलौ अन्ते अवसाने गलौ ययोस्तौ अन्तगलौ । सतौ--सश्च तश्च सतौ सगणतगणौ । अन्तगुरुः सः ४ सगणः ।।ऽ, अन्तलघुस्तः ५ तगणः ऽऽ। ग्मध्याद्यौ--मध्यश्च आद्यश्च मध्याद्यौ गौ मध्याद्यौ ययोस्तौ ग्मध्याद्यौ । ज्भौ--जगणभगणौ मध्यगुरुर्जः ६ जगणः ।ऽ।, आदिगुरुर्भः ७ भगणः ऽ।।, त्रिलः--त्रयो ला लववो यत्र स त्रिलः । नः ८ नगणस्त्रिलघुः ।।। एवं सर्वे मिलित्वा अष्टगणा भवन्तीत्यर्थः । कालिदासकृतश्लोकस्त्वेवम् " आदिमध्यावसानेषु भजसा यान्ति गौरवम् । यरता लाघवं यान्ति म्नौ तु गुरु लघुत्रिकौ ॥ " अन्यच्च ग्रन्थान्तरे " मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलश्चादिलो रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः । तो व्योमान्तलघुर्धनापहरणं जोऽर्को रुजं मध्यगो भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाक आयुस्त्रिलः ॥ २ ॥ " ॥ ७ ॥

भा० टी०-अब मगण आदि आठ गणोके लक्षण कहते हैं-तीन अक्षरके समुदायका नाम गण है ऐसे आठ गण इस छन्दोग्रन्थमें माने गये हैं। उनके भिन्न२ नाम और लक्षण इस प्रकार हैं। जिसमें तीनो गुरु ( दीर्घ ऽ ) अक्षर हो वह "मगण" ऽऽऽ, जिसके आदिमें एक लघु ( ह्रस्व । ) अक्षर

और मध्य तथा अन्तमें दो गुरुवर्ण हो वह २ यगण ।ऽऽ, जिसके मध्यमें लघु और आदि अन्तमें दो गुरु वर्ण हो वह ३ रगण ऽ।ऽ, जिसके अन्तमें एक गुरु और आदि मध्यमें दो लघु वर्ण हो वह ४ सगण ।।ऽ, जिसके अन्तमें एक लघु और आदि मध्यमें दो गुरु वर्ण हो वह ५ तगण ऽऽ।, जिसके मध्यमें एक गुरु और आदि अन्तमें दो लघु वर्ण हो वह ६ जगण ।ऽ।, जिसके आदिमें एक गुरु और मध्य अन्तमें दो लघु वर्ण हो वह ७ भगण ऽ।।, और जिसमें तीनों लघु वर्ण हो वह ८ नगण ।।। कहाता है। इस प्रकार ये आठ गण माने गये हैं। इन आठो गणोंके उदाहरण नीचे लिखे अनुसार जानो।

## आठों गणोंके उदाहरण.

१ मगणका उदाहरण (धीश्रीस्त्री) २ यगणका उदाहरण (वरासा) ३ रगणका उदाहरण (कागुहा) ४ सगणका उदाहरण (वसुधा) ५ तगणका उदाहरण (सातेक्र) ६ जगणका उदाहरण (कदास) ७ भगणका उदाहरण (किंवद) ८ नगणका उदाहरण (नहस) यह आठो गणोंके उदाहरण जानो।

## गणसंख्या, गणनाम, गणरूप, गणदेवता और गणोंके फलको दिखलानेवाला यन्त्र।

| गणसंख्या | नाम | रूप | देवता | फल |
|---|---|---|---|---|
| १ | मगण | ऽऽऽ | भूमी | लक्ष्मी आदि शुभ फल देनेवाला है |
| २ | यगण | ।ऽऽ | जलम् | वृद्धि आदि शुभ फल देनेवाला है |
| ३ | रगण | ऽ।ऽ | अग्नि | विनाश आदि अशुभ फल देनेवाला है |
| | सगण | ।।ऽ | वायु | देशाटन आदि मध्यम फल देनेवाला है |
| ५ | तगण | ऽऽ। | नभः | धन हानि आदि अशुभ फल देनेवाला है |
| ६ | जगण | ।ऽ। | सूर्य | रोग आदि अशुभ फल देनेवाला है |
| ७ | भगण | ऽ।। | चन्द्र | उज्ज्वल यश आदि शुभ फल देनेवाला है |
| ८ | नगण | ।।। | स्वर्ग | आयुर्वृद्धि आदि शुभ फल देनेवाला है |

सूचना—यह गणोंकी संख्या, रूप, देवता और शुभ अशुभ फल दिखलानेवाला ऊपर लिखा हुआ यन्त्र सातवें श्लोककी टीकाके अन्तर्गत ग्रन्था-

न्तरसे जो "मो भूमिस्त्रिगुरुः" यह संख्या २ का श्लोक लिखा है, उसीके अभिप्रायानुसार बनाकर विद्यार्थियोंके समझनेके लिये लिखा गया है।

---

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥ ८ ॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा[1]पादान्तस्त्वसौ ग्वक्रो ज्ञेयोऽन्यो मातृको ल्जुः ॥ ९ ॥

छ० टी०--इदानीमार्यादिषु चतुर्मात्रिकं गणपरिमाण पञ्चानामेव गणाना स्थितिञ्चाह। अत्रास्मिन् शास्त्रे। आर्यादिषु–आर्यामात्रासमकादिषु पञ्चैव गणाः (म स ज भ नाः) सस्थिता इति ज्ञेयाः। किंविशिष्टाः? सर्वान्तमध्यादिगुरवः–सर्वे च अन्तश्च मध्यश्चादिश्च ते सर्वान्तमध्यादयः सर्वान्तमध्यादयो गुरवो यत्रेति सर्वान्तमध्यादिगुरवः। यथा सर्वगुरुः १ मगणः। अन्तगुरुः २ सगणः। मध्यगुरुः ३ जगणः। आदिगुरु ४ भगणः। मसजभाश्चेत्यर्थः। पुनः किंविशिष्टा गणाः? चतुर्लघूपेताः–चत्वारो लघवः सन्ति यस्मिन् स चतुर्लघुश्चतुर्लघुना नगणेन उपेताः समन्विताश्चतुर्लघूपेताश्चैव पञ्च "म स ज भ नाः"। पुनः किंविशिष्टाः? चतुष्कलाः--चतस्रः कला मात्रा परिमाणं येषां ते चतुष्कलाश्चतुर्मात्रिका इत्यर्थः। अत्रेदमवधेयम्–चतुष्कलत्वरक्षार्थं मगणस्यैको गुरुस्त्याज्यः, नगणस्य लघुत्रयत्वेऽपि वर्धनीयश्चैको लघुः। सत्येव मगणस्य सर्वगुरुसज्ञा, नगणस्य चतुर्लघुसज्ञा युक्तैवार्यादिषु। अन्यथा एभिर्दशभिरक्षरैरिति प्रतिज्ञाभङ्गः स्यादवशिष्टगणेषु "यरतेषु" चतुर्मात्राणामभावात् पञ्चानामेव "मसजभनानां" स्थितिरत्रेति भावः॥८॥

गुरुलघ्वोर्लक्षणमाह। यः सानुस्वारः–सहानुस्वारेण वर्तत इति सानुस्वारः। विसर्गान्तः-विसर्गोऽन्ते यस्य स विसर्गान्तः। दीर्घः स्वभावत एव दीर्घश्च यथा आकारादिः। युक्तपरः–युक्तः सयुक्तः सयोगाविशिष्टोऽक्षरः परो यस्माद्यस्येति वा स युक्तपरः सयुक्ताक्षरात् पूर्वो वर्ण इत्यर्थः। च–चकारात्। स्वररहितव्यञ्जनान्तोऽपि गृह्यते सग्–गुरुर्दीर्घमातृको ज्ञेयः। अन्यः–अतोऽन्यः पूर्वोक्तानुस्वाराद्यनुपेतः। मात्रिकः–एकमात्रिको ल् लघुर्ज्ञेयः। असौ लघुः पादान्तः–श्लोकस्य तुर्यांशः पादः, पादस्यान्ते यः स पादान्तः पादान्ते वर्तमाने वा

---

[1] वेति दुरुक्त पिङ्गलाचार्येणाऽनुक्तत्वात्तत्र गृल गन्ते चेति सूत्रद्वयप्रदर्शनात्।

विकल्पेन लघुर्ज्ञेयः । गुरुकार्येऽपेक्षिते गुरुर्भवति, लघुकार्येऽपेक्षिते लघुरेव तिष्ठति व्यवस्थितविभाषेयम् । किंविशिष्टः स गुरुः ? वक्रो वक्राकृतिक' प्रस्तारे वक्ररूपेणेदृक् ( ऽ ) स्थापनीयः । किंविशिष्टोऽसौ लघुः ? ऋजु.—सरलाकृतिकः प्रस्तारे सरलरूपेणेदृक् ( । ) स्थापनीयः ॥ ९ ॥

भा० टी०—अब आर्या आदि मात्रा छन्दोंमें गणोका नियम वर्णन करते हैं। इस छन्दोग्रन्थमें आर्या आदि मात्रिक छन्दोंमें पांच ही गण नियत किये गये हैं। जिसमें सब गुरु हो ऐसा एक १ मगण ऽऽऽ, जिसके अन्तमें गुरु ही ऐसा दूसरा २ सगण ।। ऽ, मध्यमें गुरु हो ऐसा तीसरा ३ जगण । ऽ ।, आदि गुरु हो ऐसा चौथा ४ भगण ऽ । ।, और जिसमें चार ४ लघु वर्ण हो ऐसा पांचवा ५ नगण । । ।, इस प्रकार चार२ मात्राके५ पांचही गण माने गये हैं। विशेषता यह है कि यद्यपि १ मगण ३ गुरु ऽऽऽ का होताहै तथापि उसे ४ चार मात्राका बनानेके लिये मगणमें १ गुरुकी कमी और ३ तीन लघुके नगणमें १लघुकी वृद्धि की गई है, जिससेपां चो ( म स ज-भ न ) गण चार २ मात्राके ठीक २ बन जावें इनसे शेष रहे जो तीन ( य र त ) गण उनमें चार २ मात्रा न होनेसे वे आर्यादि मात्राछन्दोंमें ग्रहण नही किये गये ॥ ८ ॥

अब गुरु और लघुके लक्षण कहते हैं—जो वर्ण अनुस्वारसहित हो जिसके अंतमें विसर्ग हो जो स्वतः ही दीर्घ हो और जिससे परे जोड़ाक्षर अथवा स्वरहीन व्यंजन हो, सो दो मात्रावाला गुरु माना जाता है। यह गुरु प्रस्तारमें ऐसा ( ऽ ) टेढा लिखा जाता है। और उक्त चारों लक्षणोसे भिन्न जो ह्रस्व वर्ण हो सो एक मात्रावाला लघु माना जाता है। यह लघु प्रस्तारमें ऐसा सरल ( । ) सीधा लिखा जाता है । यदि यही लघु श्लोकके किसी चरण ( पाद ) के अंतमें हो तो प्रकरणवश कही गुरु और कही लघु माना जाता है। पर यह पिङ्गलाचार्यजीको अभिमत नही है ॥

## सबके उदाहरण नीचे देखो—

१ जैसे अनुस्वारसहित वर्णका उदाहरण ( यं यं ) यहां यकारपर अनुस्वार होनेसे यह यकार दो मात्रावाला गुरु जानो। २ विसर्गका उदाहरण जैसे ( यः सः ) यहां यकारके आगे विसर्ग होनेसे ( : ) यकार और सकारके आगे विसर्ग होनेसे सकार द्विमात्रिक गुरु जानो। ३ दीर्घका उदाहरण जैसे ( काशी ) यहां का और शी ये दोनो वर्ण स्वतः दीर्घ होनेके कारण ये दोनो ही द्विमात्रावाले गुरु जानो। ४ जोड़ाक्षर तथा स्वरहीन व्यंजनका उदाहरण जैसे ( तस्याः ) यहां तसे परे स्याः यह जोडाक्षर है अतः जो स्याके पूर्व ह्रस्व त है सो भी द्विमात्रिक गुरु जानो। एवं ( यत )

यहां स्वरहीन व्यंजन ( हल् ) वर्ण त् यके अंतमें होनेसे लघु ( ह्रस्व ) वर्ण य भी द्विमात्रिक गुरु जानो। ये चारों उदाहरण गुरुके हुए। अव लघुके उदाहरणको समझो। जैसे ( ननु ) यह पूर्वोक्त गुरुके चारों लक्षणोंसे भिन्न होनेसे " न " और "नु" ये दोनो ह्रस्व वर्ण एक मात्रावाले लघु जानो। इसी प्रकारसे ( जगति ) यहां तीनो ( हर हर ) यहां ४ चार और ( शिव-तनय ) यहां पांचों वर्ण एक एक मात्रावाले लघु ही जानो।

## पादान्तमें लघुको गुरु मानेजानेका उदाहरण।

"भवन्नखाः कुन्ददलश्रियो ये नमन्ति लक्ष्मीस्तुतलेखनेऽपि।
उपेन्द्रवज्रादपि कर्कशत्वं कथं गतास्ते रिपुदारणायाम् ॥"

( उपेन्द्रवज्रावृत्तमिदम् )

यह उपेन्द्रवज्रा छन्दका उदाहरणरूप श्लोक है और उपेन्द्रवज्राके प्रत्येक पादके अन्तमें गुरु ( दीर्घ ) वर्ण ही रहता है परन्तु यहां इस श्लोक-के दूसरे पादके अन्तमें जो "पि" लघु (ह्रस्व) वर्ण है सो गुरु माना गया है यदि गुरु न माना जावे तो छन्दोभंग होगा। इसी प्रकार रघुवंशके दूसरे सर्गके पहिले और दूसरे श्लोकमें देखो ( यशोधनो धेनुमृषेर्मुमोच ( ॥१॥ ) यहां " च " और ( तस्याः खुरन्यासपवित्रपांसु ) यहां पादके अंतमें जो " सु " लघु वर्ण है सो भी गुरु ( दीर्घ ) माना गया है ॥ ९ ॥

**पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।**
**पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥ १० ॥**

छ० टी०--इह--अस्मिन् ग्रन्थे। पादादौ--"सुप्तिङन्तं पदम्" पादस्य सुप्तिङन्तपदस्य आदि पादादि तस्मिन् पादादौ विभक्त्यन्तपदादावित्यर्थः। वर्णस्य--वर्तमानाक्षरस्य सयोगः--संयुक्ताक्षररूपः क्रमसञ्ज्ञकः भवति। ननु या या सञ्ज्ञा सा सा फलवतीति किमस्याः क्रमसञ्ज्ञायाः फलमत आह। तेन--क्रमसञ्ज्ञकेन संयुक्तवर्णेन। पुरस्थितेनाग्रस्थितेनापि गुरोः क्रमसञ्ज्ञकात् पूर्वस्य गुरोः क्वचित् कुत्रचिल्लघुता स्यान्न तु सर्वत्र। नहि काचित्को विधिः सर्वत्र प्रवर्तत इति॥ १०॥

भा० टी०--अव क्रमसंज्ञाका वर्णन करते हैं। सुवन्त और तिङन्त ( सुप् आदि प्रत्यय तथा तिङ् आदि प्रत्यय जिनके अन्तमें हो उस ) को पद कहते हैं उस पदके आदिमें जो वर्णका संयोग सो " क्रमसंज्ञक " कहता है उस क्रमसंज्ञक ( जोडाक्षर ) के आगे रहनेपर भी उससे पूर्वके गुरुको

१ पादादौ चरणादाविति व्याख्याने त्वार्यादौ पादव्यवस्थाऽभावाद्दोषापत्तिः। मन्मते तु " पदादाविह " पाठश्चेत्साधु ॥

कही २ लघु ( ह्रस्व ) माना है न कि सर्वत्र। इसीका उदाहरणरूप आगेका श्लोक है ॥ १० ॥

तरुणं सर्षपशाकं नवौदनं पिच्छलानि च दधीनि ।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥

छ० टी०—क्रमसञ्ज्ञकसंयोगे ज्ञेयमिदमुदाहरणम् । अत्र ग्राम्यजन इत्येतत्पदस्यादौ ग्राऽस्य वर्णस्य ग् र् विशिष्टो यः सयोगः स क्रमसञ्ज्ञकोऽस्ति तेन पुरस्थितेन सुदरिशब्दे रिकारस्य गुरुत्व न भवति, सतिं गुरुत्वे गणस्य पञ्चमात्रिकत्वापत्तेः। विरुद्ध तच्चार्यायां तत्र चतुष्कलानामेव विधानादन्यत्सर्व स्पष्टमेव ॥ ११ ॥

भा० टी०—क्रमसंज्ञकका उदाहरण–सुंदरि ग्राम्यजनः । यहा पूर्वोक्त १० वें श्लोकानुसार ग्राम्यजनः इस पदके आदिमें "ग्रा" इस अक्षरके ग् और र् इन दोनोका संयोग "क्रमसंज्ञक" माना गया है। इस क्रमसंज्ञक संयोग "ग्रा" के आगे रहनेपर भी "सुंदरि" का ह्रस्व रिकार जो कि संयोग ( जोडाक्षर परे रहते गुरु दीर्घ) होना चाहिये सो न हुआ किन्तु लघु ही माना गया है।। यदि गुरु ( दीर्घ ) मान लेवेंगे तो गण ५ मात्राका हो जानेसे "आर्या छन्द "(तरुणं सर्षपशाकं) ये विगड़ जावेगा कारण आर्याछन्दमें ४ मात्राके गणकाही ग्रहण किया गया है क्रम न्याक्हका नही । उक्त विषयमें और भी उदाहरण लिखतेहैं।

" तव ह्रियापह्रियो मम ह्रीरभूच्छाशिग्रहेऽपि द्रुतं न धता ततः ।
वहुलभ्रामरमेचकतामसं मम प्रिये क समेष्यति तत् पुनः ॥ "

इस द्रुतविलंवित छन्दमें कईजगह संयुक्ताक्षर परे रहने पर भी पूर्व वर्ण लघु ही माने गये हैं। जैसे ( तव ) यहां व ( मम ) यहां म ( शशि ) शि इत्यादि ॥ यह विधि कही २ ही होती हैं सव जगह नही होती अतः छात्रगण क्रमसंज्ञक विधिको सव जगह काममें न लावें। ( तरुणं सर्षपशाकं ) इस ११ वें श्लोकका अर्थ यह है कोई नगरनिवासी जन अपनी स्त्रीसे कहताहै। हे सुंदरि! यह गांवमें रहनेवाला मनुष्य थोड़ा द्रव्य ( पैसा ) खर्च करके नये सरसोंके पत्तोंका शाक नये चावलोंका भात और चिकना दही इन वस्तुओंको वडी स्वादु मानके खाता है। सत्य है गांवठी आदमीको जैसी ये वस्तुएं प्रिय लगती है वैसी दूसरी नही लगती ॥ ११ ॥

अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञिका ॥ १२ ॥

छ० टी०—उत्तरत्र वृत्तव्यवहाराङ्गभूताः सञ्ज्ञाः सङ्ख्यात्मिका आह । अब्धि-भूतरसादीनां शब्दानां सञ्ज्ञाश्चतुः-पञ्च-षडादि सङ्ख्यारूपाः सञ्ज्ञाः ; लोकतः—ज्योतिश्शास्त्रान्नाममालादिकोषतो वा ज्ञेयाः । चतुर्थांशः—श्लोकस्य तुर्यांशः । पादश्चरणोऽङ्घ्रिर्ज्ञेयः । विच्छेदसञ्ज्ञिका—विच्छेदोऽवसान विरामो विरतिरिति सञ्ज्ञा यस्याः सा विच्छेदसञ्ज्ञिका यतिर्ज्ञेया । सा चाब्धिभूतरसाद्यवच्छिन्नेष्वक्षरेषु भवति । तन्नियमस्तु—" यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः । समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥ १ ॥ क्वचित्तु पादमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥ २ ॥ " इत्यादयो यतिनियमा अपि लोकतो ज्ञेयाः ॥ १२ ॥

भा०टी०—छन्दोंके उपयोगमें आनेवाली और भी संज्ञाओंको दिखलाते हैं। अब्धि ( चार ४ ), भूत ( पांच ५ ), रस ( छः ६ ), आदि संख्यावाचक शब्दोंकी संज्ञा ज्योतिष शास्त्रसे अथवा नाममालादि कोषसे जानना चाहिये। श्लोकके चतुर्थांश ( चौथे भाग ) को पाद ( चरण ) कहते हैं। और छन्दोंमें जितने २ वर्णोंपर जो विराम ( ठहरना ) होता है सो यति ( विरति ) कहाती ह। यतिका उदाहरणः—" ( पंचरसैः श्रीर्भतनगगैः स्यात् ) " जैसे इस श्रीछन्दमें पहिले ५ अक्षरोंपर और फिर ६ अक्षरोंपर ठहरना पड़ताहै इसीको यति कहते हैं॥ १२॥

युक् समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्धसमं वृत्तं विषमं च तथा परम् ॥ १३ ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १४ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५ ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥

छ० टी०—सद्भिः—छन्दोविद्भिः। युक्—समजातीयसङ्ख्यायुक्त द्वितीयचतुर्थादि-कम् । समं—समसंज्ञकम् । अयुक्—विषमजातीयसंख्यायुक्त प्रथमतृतीयादिकम् । स्थानं विषमं—विषमसंज्ञम् । निगद्यते चकारात् समविषमयोरपरापि सञ्ज्ञा ज्ञेया ।

" अनोजः समः ओजः विषमश्चेति " वृत्त—छन्दः । एकं सम—समसंज्ञ। च—पुनः। द्वितीयमर्धसमम् अर्धसमसंज्ञं । तथा-तथैव । अपर तृतीय विषम—विषमसज्ञम् । एव त्रिविध ज्ञेयम् ॥ १२ ॥

तत्र समवृत्तलक्षणमाह । छन्दःशास्त्रतत्त्वज्ञाः—छन्दसा शास्त्र छन्दश्शास्त्रं छन्दःशास्त्रस्य तत्त्व जानन्तीति छन्दःशास्त्रतत्त्वज्ञा । तत् सम वृत्त—समसज्ञ छन्दः । प्रचक्षते—वदन्ति । तत् किम् ? यस्य—वृत्तस्य । चत्वारोङ्घ्रयः—चत्वारः पादाः । तुल्यलक्षणलक्षिताः—तुल्येन समजातीयेन लक्षणेन लक्षिताश्चिह्निता इति समलक्षणलक्षिताः स्युस्तदित्यर्थः ॥ १४ ॥

अर्धसमलक्षणमाह । यस्य वृत्तस्य प्रथमाङ्घ्रिसमः—प्रथमचरणतुल्यः । तृतीयश्चरणः—तृतीयपादः भवेत् । द्वितीयः—द्वितीयपादः । तुर्यवत्—तुर्यचरणसमश्चतुर्थपादतुल्यो भवेत् । तद्वृत्तं—तच्छन्दः । अर्धसमम्—अर्धसमसंज्ञम् उच्यते ॥१५॥

विषमवृत्तलक्षणमाह । छन्दःशास्त्रविशारदाः—छन्दश्शास्त्रे निपुणास्तद् वृत्त—तच्छन्दः । विषम—विषमसज्ञम् । आहुः प्रोचुतस्तत् किं; यस्य—यद्वृत्तस्य । पादचतुष्के—चरणचतुष्टयेऽपि । परस्पर भिन्न—विभिन्न भेदयुक्त लक्षण । " चिह्न लक्ष्म च लक्षणम् " इत्यमरः । भवेदिति ॥ १६ ॥

## स्थानोंकी समविषमसंज्ञा ।

**भा० टी०—छन्दशास्त्रके जाननेवालो करके युक्त अथवा अनोज अर्थात् समसंख्यावाला जैसा २ दूसरा ४ चौथा और ६ छवां आदि स्थान समसंज्ञक और अयुक्त अथवा ओज अर्थात विषमसंख्यावाला जैसा १ पहिला, ३ तीसरा, पांचवां आदि स्थान विषमसंज्ञक कहा गया है। ऐसे ही छन्द भी तीन प्रकारके होते हैं। १ एक समसंज्ञक। २ दूसरा अर्धसमसंज्ञक और ३ तीसरा विषमसंज्ञक जानो ॥ १२ ॥**

## १—समसंज्ञक छन्दके लक्षण ।

**जिस छन्दके ४ चारों चरण समान (एकसे) लक्षणवाले हों उसको छन्दःशास्त्रके तत्त्ववेत्ता "समवृत्त" (समसंज्ञक छन्द) कहते हैं ॥ १४ ॥**

## २—अर्धसमसंज्ञक छन्दके लक्षण ।

**जिस छन्दके १ पहले चरणके समान ३ तीसरा चरण और ४ चौथे चरणके समान २ दूसरा चरण हो वह अर्धसमवृत्त (अर्धसमसंज्ञक छन्द) कहाता है ॥ १५ ॥**

## ३-विषमसंज्ञक छन्दलक्षण ।

जिस छन्दके चारो चरणोमें भिन्न ( न्यारे न्यारे ) लक्षण हो उस छन्दको छन्दशास्त्रके जाननेवाले विषमवृत्त ( विषम संज्ञक छन्द ) कहते हैं ॥ १६ ॥

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः ।
पृथक्च्छन्दो भवेत्पादैर्यावत् षड्विंशतिं गतम् ॥ १७ ॥
तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ।
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८ ॥

छ० टी०-एकाक्षरात् पादात् आरभ्य-एकाक्षरांघ्रिमादितः कृत्वा । ऐकैकाक्षरवर्धितैः-एककमक्षर वर्धित येषु ते एकैकाक्षरवर्धितास्तैरेकैकाक्षरवर्धितैः । पादैश्चरणयावत् षड्विंशति-षड्विंशत्यक्षरपादपर्यन्तम् । गतं-प्राप्तम् । तावत् पृथक् छन्दः-भिन्न वृत्तं भवेत् । तद्यथा प्रथमजातावुक्ताया चत्वारोऽपि चरणाः एकाक्षराश्चतुरक्षरात्मकश्च श्लोको भवति । एवमत्युक्ताया द्व्यक्षराश्चत्वारोऽपि चरणाः श्लोकोऽष्टाक्षरश्च भवत्येवमेकैकाक्षरवर्धनक्रमेणोत्कृत्यां जातौ षड्विंशत्यक्षराणामेकैकश्चरणस्तादृशैश्चतुर्भिश्चरणैः संयुतश्चतुरुत्तरशताक्षरसख्यात्मको भवति श्लोकोऽनेनाग्रे वक्ष्यमाणाः षड्विंशतिजातयो भवन्ति च्छन्दसामिति सुचितम्॥ १७॥

तदग्रे दण्डक गाथाश्चाह । तत्-तस्मात् षड्विंशत्यक्षरपादात् । ऊर्ध्वम् उपरि । चण्डवृष्ट्यादिदण्डकाः-चण्डवृष्टिरादिर्येषां ते चण्डवृष्ट्यादयश्चण्डवृष्ट्यादयश्च ते दण्डकाश्च चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः कथिता इत्यर्थः । शेषम्-पूर्वोक्तातिरिक्त छन्दः । गाथा-गाथासज्ञ भवति । किंविशिष्टा गाथा ? त्रिभिः षड्भिश्चरणैश्चकाराद्विषमाक्षरैः पादैः । उपलक्षिताश्चिह्निताः ॥ १८ ॥

भा० टी०-एक अक्षरके चरणसे लेके जिनमें एक एक अक्षर बढते जावे ऐसे ( २६ ) छःवीस अक्षरके चरण पर्यंत निराले २ प्रकारके छन्द होते हैं। जैसे प्रथम उक्ता जातिमें एक एक अक्षर ( वर्ण ) के ४ चरण और ऐसे ४ चार चरणोयुक्त ( ४ अक्षरों ) का १ श्लोक होता है। एवं अत्युक्तामें दो दो अक्षरोंके चार चरण और ऐसे चार चरणयुक्त ८ अक्षरोंका १ श्लोक होता है। इसी प्रकार एक एक अक्षर प्रत्येक जातिमें बढाते २ उत्कृति ( जो २६ ) छःवीसवी जाति है। उसमें छः वीस २ अक्षरोको एक एक चरण और ऐसे ४ चार चरण युक्त १०४ अक्षरोका १ एक श्लोक होता है। ऐसी २६ छःवीस जाति छन्दोंकी है॥ १७॥

२६ छःबीस अक्षरके चरणसे ऊपर "चंडवृष्टि" आदि दण्डक कहाते हैं। और उक्त छन्दोंसे भिन्न लक्षणवाली (निराले प्रकारकी) जिसके विषम (कम ज्यादह) अक्षरवाले ३ तीन अथवा ६ छः चरण हो सो गाथा कहाती है ॥ १८ ॥

उक्तात्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ २० ॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चापि तथाभिकृतिरुत्कृतिः ॥ २१ ॥
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥

इति श्री केदारभट्टकृते वृत्तरत्नाकरे संज्ञानिरूपणं नाम प्रथमोऽध्यायः ॥

छ० टी०--अथ छन्दसामुक्तादिजातिसञ्ज्ञामाह ।१ उक्ता २ अत्युक्ता तथा ३ मध्या ४ प्रतिष्ठा । सुपूर्विका--सु पूर्व यस्याः सा सुपूर्विका । अन्या--अपरा । प्रतिष्ठा--५ सुप्रतिष्ठा ज्ञेयेत्यर्थः । ६ गायत्री ७ उष्णिक् ८ अनुष्टुप् च--पुनः । ९ बृहती च एव--पुनरेव । १० पाङ्क्तिः ॥ १९ ॥ ११ त्रिष्टुप् च--पुनः १२ जगती तथा एव च--तथैव च । १३ अतिजगती १४ शक्करी । अतिपूर्वा--अति पूर्वं यस्याः सा अतिपूर्वा एवंविधा सा पूर्वोक्ता शक्करी--१५ अतिशक्करी स्यात् । ततः--तदग्रे । अष्ट्यत्यष्टी--अष्टिश्च अत्यष्टिश्च अष्ट्यत्यष्टी । स्मृते--कथिते । एका १६ अष्टिः १७ अत्यष्टिश्चान्येत्यर्थः ॥ २० ॥ च--पुनः । १८ धृतिः १९ अतिधृतिः । च एव--पुनरेव । २० कृतिः २१ प्रकृतिः २२ आकृतिः २३ विकृतिः २४ सस्कृतिः च अपि--पुनरपि । २५ अभिकृतिः । तथा--तथैव । २६ उत्कृतिः ॥ २१ ॥ मयेति शेषः--मया केदारभट्टेन । इति--पूर्वोक्तप्रकारेण । छन्दसा--वृत्तानाम् । संज्ञाः--उक्तादिषड्विंशतिजातिसञ्ज्ञाः । उक्ताः--कथिताः । सांप्रतम्--इदानीम् । क्रमशः--यथाक्रमात् । सर्ववृत्तानां-निखिलच्छन्दसाम् । लक्षणम् चिह्नम् । मात्रावृत्तानुपूर्वकम्--मात्रावृत्तमार्यादिवृत्तमनुपूर्वं प्रथमं यस्यां क्रियायां तन्मात्रावृत्तानुपूर्वकं यथा भवति तथा । वच्मि--कथयिष्यामि । "वर्तमानसामीप्ये

वर्तमानवद्वा । ३ । ३ । १३१ । " इति सूत्राद्वर्तमानसामीप्येऽय वर्तमान-प्रयोगः। अत्रेदमत्रधेयम्=मात्रावर्णविभेदेनेति पूर्वोक्तचतुर्थश्लोके मात्राशब्दस्य प्रथमप्रयोगादादौ मात्रावृत्तमभिधाय पश्चाद्वर्णवृत्तानां लक्षण वच्मीति भावः ॥ २२ ॥

## छन्दोंकी उक्ता आदि २६ जातिके नाम ।

भा० टी०-१ उक्ता २ अत्युक्ता ३ मध्या ४ प्रतिष्ठा ५ सुप्रतिष्ठा ६ गायत्री ७उष्णिक् ८ अनुष्टुप् ९ बृहती १०पंक्ति ११ त्रिष्टुप् १२ जगती १३ अतिजगती १४ शक्करी १५ अति शक्करी १६ अष्टि १७ अत्यष्टि १८ धृति १९ अतिधृति २०कृति २१ प्रकृति २२ आकृति २३ विकृति २४ संस्कृति २५ अभिकृति और २६ उत्कृति ये छःबीस छन्दोंकी जातिके नाम हैं ॥ १९ ॥ २० ॥ २१ ॥ इस प्रकार केदार भट्टजी द्वारा छन्दोंकी २६ जातिसंज्ञा कही गई हैं । अब इसके आगे यथाक्रमसे पहिले मात्रा छन्द ( आर्या आदि ) और फिर वर्णछन्द ( श्री आदि ) एवं समस्त लौकिक छन्दोंके लक्षण कहेंगे ॥ २२ ॥

इति श्रीकविराजदाधीचपण्डित ज्ञारसरामशास्त्रिविरचितायां छन्दःसुबोधिन्यां सरलाया च सज्ञाप्रकरणनिरूपणं नाम प्रथमोऽध्यायः ॥

---

# अथ द्वितीयोऽध्यायः ।



## आर्यालक्षणम् ।

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नेगणो वा प्रथमार्धे नियतमार्यायाः ॥ १ ॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च स यतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठे लः ॥ २ ॥

छ० टी०—तत्रादावार्यालक्षणमाह । आर्यायाः—आर्यावृत्तस्य । एतल्लक्ष्म--एतल्लक्षणम् । नियतं--निश्चितम् । तत् किम् ? यत् प्रथमार्धे--प्रथमञ्च तत् अर्धञ्च प्रथमार्धं तस्मिन् प्रथमार्धे,[1]प्रथमे अर्धे पूर्वार्धे इत्यर्थः । सप्तगणाः—पूर्वोक्तेषु मसजभनेषु चतुर्मात्रिकेष्वेव चतुर्मात्रिकाः सप्तगणाः भवन्ति । किंविशिष्टाः सप्तगणाः ? गोपेता.--गेन गुरुणा उपेताः गोपेताः । आदौ सप्त गणाश्चान्ते गुरुरेको भवतीत्यर्थः । इह--आर्यायाम् । विषमे--विषमस्थाने--प्रथमतृतीयपञ्चमसप्तमे । जः जगणः

---

१ " षष्ठोऽय च न लघुर्वा " इति कुत्रचित्पाठ. ।

न भवति, किन्तु मसभनानामन्यतमो भवति । अयं--जगणः । षष्ठः षष्ठस्थानस्थः स्यादेव । वा--अथवा । नगणः--लघुचतुष्टयात्मकः षष्ठः स्यादेव ताभ्यामन्यो गणः षष्ठस्थाने न भवतीतिनियमः ॥ अत्रार्धमात्रमेवाधिकृत्य लक्ष्मनिरूपणात् " स्वराअर्धञ्चार्यार्धम् । ४ । १४ । " इति पिङ्गलाचार्योक्तसूत्रदर्शनाच्चार्यायां पदव्यवस्थाभावोऽवगम्यते ॥ १ ॥

आर्योत्तरार्धलक्षण यतिनियमञ्चाह। इह--आर्यायाम् । चरमे अर्धे--उत्तरार्धे । षष्ठे--षष्ठगणस्थाने । लः--एको लघुरक्षरः कार्यः । पूर्वार्धवन्नान्यो गणः कतऽगो-ऽनेन त्रिशन्मात्रात्मकः पूर्वार्धः सप्तविंशतिमात्रात्मकश्चोत्तरार्धः सूचितः सर्वमन्यल्ल-क्षण पूर्वार्धवदेव बोध्यम्। यतिपदनियमस्त्वेवम् । इह—आर्यायाम्। प्रथमार्धे--पूर्वार्धे । षष्ठे—षष्ठे गणे । न्ले—चतुर्मात्रात्मके नगणरूपे सर्वलघौ सति द्वितीयलात् षष्ठ-गणस्य द्वितीयलघोः प्राक् पूर्व—प्रथमलध्वन्ते । सः प्रसिद्धो यतिपदनियमः--यतेः पद स्थान यतिपदम्, यतिपदस्य नियमो यतिपदनियमः स्थाननिश्चयो विरामो विरतिर्भवतीत्यर्थः। यथास्मिन्नेव द्वितीयश्लोके षष्ठगणस्य चकारान्ते सकारादौ विरामः। च पुनः परके—सप्तमगणे । न्ले—सर्वलघौ । सति मुखलात्—सप्तमगणस्य प्रथमलघो. प्राक् पूर्व षष्ठगणान्ते स यतिपदनियमो भवेत् यथात्रैव सप्तमग-णस्य पकारादौ तिकारान्ते विरामः पूर्वार्धे यतिव्यवस्थेय ज्ञेया । तथा चरमेऽर्धे—उत्तरार्धे । पञ्चमके--पञ्चमगणे । न्ले--सर्वलघौ सति । तस्मात्--पञ्चमगणात्। पूर्व चतुर्थगणान्ते यतिः--विरामः भवति । यथात्रोत्तरार्धे " स्मा " इत्य-स्यान्ते विरामः । भवतोऽत्र श्लोकौ—" षष्ठे द्वितीयमारभ्यारम्भे चारभ्यते पदम् । सप्तमे ने पुनर्मुख्या पूर्वार्धेऽसौ यतिः स्मृता ॥ पदमारभ्य ते नित्य गृहीत्वा प्रथम लघुम्। पञ्चमे ने बुधैरेव चरमार्धे यतिः स्मृता ॥" सर्वत्रात्रोदाहरण तु लक्षणपद्यमेव ज्ञेयम्। लक्ष्यलक्षणसयुक्तमित्युक्तत्वाद्विद्यार्थिना छन्दोबोधाय तु मद्वृत्तान्यखिल-छन्दसामप्युदाहरणानि च सरलाया द्रष्टव्यानि ॥ २ ॥

## आर्याछन्दका लक्षण।

**भा० टी०—आर्याछन्दमें १ पूर्वार्ध और २ रा उत्तरार्ध एवं दो ही भाग रहते हैं पूर्वार्ध (प्रथम भाग) में चार २ मात्राके ७ गण और अन्तमें १ गुरु (दीर्घवर्ण) होना चाहिये पर इस बातका पूरा ध्यान रहे कि विषमस्थान (जैसे १ पहिले ३ तीसरे ५ पांचवे और सातवें गणकी जगह) में जगण**

१ अत्र पञ्चमी प्राक्सूचिका यथा पाटलिपुत्राद्दृष्टो देव. ।

न हो किन्तु यह जगण अथवा ४ मात्राका नगण ६ छठे गणकी जगह अवश्य हो यह लक्षण आर्याके पूर्वार्ध ( पहिले भाग ) का जानो ॥ १ ॥ उत्तरार्ध ( आर्याके पीछेके आधे भाग ) में ६ छठे स्थानसे ( ६ वें गणकी जगह ) केवल एक मात्राका एक लघु ह्रस्व वर्ण ही रहना चाहिये, और समस्त लक्षण पूर्वार्धके समान ही हो, सारांश ( निचोड़ ) यह कि आर्याछन्दमें उक्त रीतिके अनुसार ३० मात्राका पहिला और २७ मात्राका दूसरा ( उत्तर ) दल होना चाहिये ॥ १ ॥

## आर्याछन्दमें यतिका नियम।

यदि आर्याके पूर्वार्ध ( पहिले भाग ) में ६ वां गण ४ मात्राका सब लघु रूप ही हो तो, उस ६ वें गणके दूसरे लघु वर्णसे जो पूर्व (पहिला लघु वर्ण) उसके अंतमें यति ( विराम ) हो जैसे इसी दूसरे श्लोकमें ६ वां गण ( च स यति ) यह सब लघुरूप है अतः इसके २ रे लघुवर्ण " स " से जो पूर्व ( पहिला लघु वर्ण ) " च " है, इसके अंतमें यति ( विराम ) हो ॥ और जो ७ वां गण ४ मात्राका सब लघु रूप हो तो ७ वें गणके पहिले लघुसे पूर्व अर्थात् ६ वें गणके अंतमें यति ( विराम ) होय ॥ जैसे इसी श्लोकमें ७ वां गण ( पदनिय ) यह सब लघुरूप है अतः इस ७ वें गणके प्रथम लघु ( प ) से पूर्व ६ वें गणके अंतमें जो ( ति ) है यही यति (विराम ) जानो । आर्याके पूर्वार्धमें यतिका नियम इस प्रकार है ॥ इसके आगे आर्याके उत्तरार्धमें यतिक नियम बतलाते हैं। यदि आर्याके उत्तरार्ध ( पीछेके आधे भाग ) में ५ वां गण सर्व लघु हो तो उस ५ वें गणसे पूर्व ४ थे गणके अन्तमें यति (विराम) हो । जैसे इसी श्लोकके उत्तरार्धमें ( तस्मादिह भवति षष्ठे लः ) यहां " दिहभव " यह ५ वां गण सर्व लघु होनेसे इस ५ वें गणसे पूर्व ( पहिला ) जो ४ था गण ( तस्मा ) इसके अंतमें यति ( विराम ) जानो ॥ २ ॥

## आर्याछन्दका उदाहरण।

( यथा मम )

" श्रीपाणिनिना प्रोक्ता आर्या ब्राह्मणकुमारराजानः ।
आर्या वैश्याः सर्वे भवन्ति शूद्राः कथं चार्याः ॥ १ ॥
रामास्त्रिभुवननाथो गुरुरपि पितृवाक्यमुदितशुद्धमनाः ।
चक्रे काननवासं धर्मं नहि जहति जात्वार्याः ॥ २ ॥ "

ये दोनो श्लोक आर्याछन्दके उदाहरणरूप जानो ॥

## पथ्यालक्षणम्।

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥ ३ ॥

छ० टी०—यस्याः--आर्यायाः। दलयोः--पूर्वोत्तरार्द्धयोर्द्वयोरपि। आद्येषु--आदौ भवा आद्यास्तेष्वाद्येषु। त्रिषु अंशकेषु आद्यगणत्रयान्तेषु द्वादशमात्रास्वित्यर्थः। पादः—यतिः दृश्यते पादग्रहणमत्र यत्युपलक्षणार्थम्। तस्याः—आर्यायाः। छन्दोविद्भिः—छन्दःशास्त्रज्ञैः। पथ्या इति नाम समाख्यातम्—प्रकथितम्। सर्वमन्यल्लक्षणमार्यावदेव ज्ञेयम्॥ ३॥

भा० टी०—जिस आर्याके दोनो दलो ( पूर्वार्ध और उत्तरार्ध ) के पहिले ३ तीन गणो ( १२ मात्रा ) के अन्तमें यतिः ( विराम ) हो उस आर्याका छन्दशास्त्रके वेत्ताओं करके " पथ्या " नाम कहा गया है॥ ३॥

## पथ्या छन्दका उदाहरण।

" पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।
यदि वचसा मनसा वा द्रुह्यति नित्यं न भूतेभ्यः॥
यदि तव हृदयं विद्वन् सुनयं स्वप्नेऽपि मास्म सेविष्ठाः।
सचिवजितं षण्ढजितं युवतिजितं चैव राजानम्॥ "

## विपुलालक्षणम्।

**संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।**
**यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥ ४॥**

छ० टी०—यस्याः—आर्यायाः। द्वयोः शकलयोः—पूर्वोत्तरार्धयोः। आदिमं—प्राथमिकं गणत्रय द्वादशमात्रात्मकम्। संलङ्घ्य—अतिक्रम्य। पादः—यतिः भवति। पिङ्गलश्चासौ नागश्च पिङ्गलनागः—पिङ्गलाचार्यः। पिङ्गलाचार्यस्य शेषांशभूतत्वादन्वर्थमिद नाम। तां आर्या—विपुलाम् इति समाख्याति॥ सामान्येनैतद्विधानमुभयविपुलालक्ष्मघटितत्वाद्विशेषस्त्वाद्यन्तोभयभेदेनेयं विपुला त्रिविधा भवति। यथा हि—यस्या आर्यायाः पूर्वार्धे त्रिष्वाद्यगणेषु पादो न विश्राम्यति सा १ आदिविपुला भवति। उत्तरार्धे त्रिष्वाद्यगणेषु पादो न विश्राम्यति सा २ अन्तविपुला भवति। द्वयोरपि पूर्वोत्तरार्धयोस्त्रिष्वाद्यगणेषु पादो न विश्राम्यति सा ३ उभयविपुला भवतीति॥ ४॥

भा० टी०—जिस आर्याके पूर्वाध और उत्तरार्ध ( पहिले और दूसरे भाग ) के पहिलेके ३ गणोको लांघकर यति ( विराम ) हो उसको पिगलाचार्य " विपुला छन्द " कहते हैं। केदारभट्टजीका यह कथन उभय विपुलाके लक्षणमें घटित होनेसे सामान्यतः विपुलाका लक्षण जानो। विशेषतः

आदि अन्त और उभय इन ३ भेदसे यह विपुला ३ तीन प्रकारकी होती है। जैसे जिस आर्याके पूर्वार्धके पहिलेके ३ तीनों गणोंको लांघकर यति (विश्राम ) हो वह १ आदिविपुला उत्तरार्धके पहिलेके ३ तीनों गणोंको लांघकर यदि यति ( विश्राम ) हो तो वह २ अन्तविपुला और पूर्वार्ध तथा उत्तरार्ध दोनो भागके पहिलेके ३ तीनों गणोंको लांघकर यति ( विश्राम ) हो तो वह " उभय विपुला " कहाती है ॥ जैसे केदारभट्टकृत लक्षणरूप ४ चौथा श्लोक ॥ ४ ॥

## तीनों प्रकारकी विपुलाके उदाहरण ।

आदिविपुला"-स्निग्धच्छायालावण्यलेपिनी किञ्चिदवनतघ्राणा।
मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः ॥ १ ॥

अन्तविपुला-चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः।
नीविविलोकनव्याजकथितजघना जघनविपुला ॥ २ ॥

उभयविपुला-या स्त्री कुचकलशनितम्बमण्डले जायते महाविपुला।
गम्भीरनाभिरतिदीर्घलोचना भवति सा सुभगा ॥ ३ ॥"

## चपलालक्षणम् ।

**उभयार्धयोर्जकारौ द्वितियतुर्यौ गमध्यगौ यस्याः।**
**चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥**

छ० टी०-यस्याः-आर्यायाः । उभयार्द्धयोः-उभयञ्च तदर्धञ्च उभयार्धं तयोः उभयार्द्धयोः उभयोरप्यर्द्धयोः । द्वितीयतुर्यौ-द्वितीयचतुर्थस्थानीयौ । जकारौ जगणौ स्याताम् । तस्याः-आर्यायाः । नागराजेन-नागानां राजा नागराजस्तेन नागराजेन शेषांशभूतेन पिङ्गलाचार्येण । चपला इति नाम प्रकीर्तितम्-वर्णितम् । किंविशिष्टौ जकारौ । गमध्यगौ-गौ गुरू मध्यगौ ययोस्तौ गमध्यगौ गुरुमध्यावित्यर्थः । ननु जकारग्रहणेनैव गमध्यगतत्वलाभे पुनः किमर्थं गमध्यगाविति निरर्थकविशेषणमत्रोच्यते="चपलाद्वितीयचतुर्थौ ग् मध्ये जौ" । ४ । २४ । इति भगवता पिङ्गलाचार्येणोक्तत्वादिह गमध्यगाविति विशेषणं युक्तमेव । गूढाशयस्तु गमध्यगाविति वदता ग्रन्थकारेण प्रथमो गणोऽन्तगुरुरेव । तृतीयो गणो द्विगुरुरेव । पञ्चमो गणोऽपि द्विगुरुरेवेति नियमः सूचितः ॥ ५ ॥

भा० टी०-आर्याके पूर्वार्ध ( पूर्वभाग ) और उत्तरार्ध ( उत्तर भाग ) के २ दूसरे और ४ चौथे स्थानमें गुरु है मध्यमें जिसके ऐसा जगण ( ।ऽ। ) हो उस आर्याको पिङ्गलाचार्यजीने " चपला " नामका छन्द कहा है। ध्यान

रहे कि चपला छन्दसे उक्त लक्षणके सिवाय १ पहिला गण अंत गुरु-वाला । ३ तीसरा गण दो गुरुवाला और ५ पांचवां गण भी दो गुरुवाला होना ही चाहिये शेष लक्षण आर्याके समान जानो ॥ ५ ॥

### चपला छन्दका उदाहरण ।

" चपलामितीह लक्ष्मी विचिन्त्य नित्यं हरिं चिदानन्दम् ।
कमनीयमादिदेवं भजेश्वरं मुक्तिदातारम् ॥ "

### मुखचपलालक्षणम् ।

**आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।**
**शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥**

छ० टी०—यस्याः—आर्यायाः । आद्य दल—पूर्वार्द्धम् । समस्त—समग्रमपि । चपलागत—चपलायां गत प्राप्तं यत्तच्चपलागतम् चपलाश्रित लक्ष्म—लक्षणम् । भजेत—सेवेत । शेषे—अवशिष्टे उत्तरार्धे । या पूर्वजलक्ष्मा—पूर्वायां पथ्यायां जातं पूर्वज पूर्वोक्त लक्ष्म चिह्न यस्याः सा पूर्वजलक्ष्मा पथ्यासमान लक्षणेत्यर्थः । सा मुनिना—पिङ्गलाचार्येण । मुखचपला उदिता—कथिता ॥ ६ ॥

भा० टी०—जिस आर्याका पूर्वार्द्ध चपलाके समान हो और उत्तरार्द्धमें जिसका पथ्याके समान लक्षण हो वह पिङ्गलाचार्यद्वारा "मुखचपला" नामक छन्द कहा गया है ॥ ६ ॥

### मुखचपला छन्दका उदाहरण ।

" नाहं वृणोमि राज्यं न वा सुराधीशसंपदं किन्तु ।
हरिचरणाम्बुजरेणौ परिलुण्ठनमालि सौभाग्यम् ॥ "

### जघनचपलालक्षणम् ।

**प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे तु चपलायाः ।**
**लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥**

छ० टी०—या प्रथमे अर्द्धे—पूर्वार्द्धे । प्राक्प्रतिपादितं पूर्वोक्तम् आर्या-पूर्वार्द्धप्रतिपादितम् । लक्ष्म—लक्षणम् । आश्रयेत । तथा प्रथमेतरे—प्रथमात् पूर्वार्धादितर प्रथमेतरं तस्मिन् प्रथमेतरार्द्धे उत्तरार्द्धे । चपलायाः लक्ष्म—लक्षणम् । आश्रयेत साऽर्या विशुद्धधीभिः—विशुद्धा निर्मला धीर्बुद्धिर्येषा ते विशुद्धधियस्तैर्विशुद्धधीभिर्विमलमतिभिर्जघनचपला—जघने पश्चाद्भागे चपला, इचेति

योगार्थोऽपि । उक्ता-कथिता । अत्र पथ्यादिजघनचपलान्तानां परस्परसाङ्कर्यात् षोडश भेदा भवन्ति संग्रहोऽयमत्र-

" एकैव भवति पथ्या तिस्रो विपुला ततश्चतस्रस्ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्य्याः स्युः " ॥ ७ ॥

**भा० टी-जो पूर्वार्ध ( पहिले भाग ) में आर्या छन्दके पूर्वार्धके लक्षणयुक्त हो और उत्तरार्ध ( उत्तरभाग ) में चपलाके लक्षण (२ रे ४ थे स्थानमें जगण) युक्त हो सो विद्वानोंद्वारा "जघनचपला" कही गई है ॥ ७ ॥**

## जघन चपला छन्दका उदाहरण ।

**" यत्पादतलकनिष्ठा न स्पृशति महीमनामिका चापि ।
सा सर्वधूतभाग्या भवेदवश्यं जघनचपला ॥ "**

इत्यार्याप्रकरणम् ।

---

## गीतिच्छन्दोलक्षणम् ।

**आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥ ८ ॥**

**छ० टी०**-आर्याप्रथमदलोक्तम्-प्रथमं च तद्दलं च प्रथमदलम् आर्यायाः प्रथमदलम् आर्याप्रथमदलम् आर्याप्रथमदले उक्तमार्याप्रथमदलोक्तम् आर्या-पूर्वार्द्धे कथितमित्यर्थः । लक्षणं कथमपि-पथ्याविपुलान्यतमप्रकारेण । उभयोः दलयोः पूर्वोत्तरार्धयोर्यदि भवेत् तर्हि भुजङ्गेशः-भुजङ्गानामीशः पिङ्गलनागः । ताम् आर्यां गीतिं गीतवान् । किंविशिष्टां गीतिम् ? कृतयतिशोभाम्--कृता यति-भिर्यथोक्तस्थानीयविरामैः शोभा यस्यां सा कृतयतिशोभा तां कृतयतिशोभाम् । षोडश भेदा भवन्त्यस्याश्चापि ॥ ८ ॥

**भा० टी०-आर्याके पूर्वार्धके समान जिसके दोनों दलों ( पूर्वार्ध और उत्त-रार्ध ) के एकसे लक्षण हों उसको पिङ्गलाचार्यजीने गीतिछन्द कहा है ॥ ८॥**

## गीतिछन्दका उदाहरण ।

( यथा मम )

**" मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।
गीतिः पौरवधूनां मधुना कुसुमायुधं प्रबोधयति ॥
मुन्यब्ध्यङ्काब्जेऽब्दे त्वोर्जे शुक्रेऽकंजे च विश्वतिथौ ।
चक्रे ज्ञारसरामो भारतशिक्षासुदर्शनं पूर्णम् ॥ "**

## उपगीतिलक्षणम् ।

**आर्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत्स्यात् ।**
**यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥**

**छ० टी०**—आर्याद्वितीयके—आर्याया द्वितीयकमार्याद्वितीयक तस्मिन्नार्याद्वितीयके । अर्द्धे आर्योत्तरार्धे—यल्लक्षण गदित—चरमेऽर्द्धे षष्ठे ल इत्येवरूपं कथितं तल्लक्षण यदि । उभयोरपि दलयोः—पूर्वोत्तरार्द्धयोः । स्यात्तर्हि मुनिः पिङ्गलाचार्यस्तामार्याम् उपगीति ब्रूते—कथयति ॥ ९ ॥

**भा० टी०—आर्याके उत्तरार्धमें जो लक्षण ( ६ वें स्थानमें १ लघुवर्णका होना ) कहा गया है। वही लक्षण जिसके पूर्वार्ध और उत्तरार्ध दोनोंमें हो उसे पिङ्गलाचार्यजीने "उपगीतिछन्द" कहा है ॥ ९ ॥**

### उपगीति छन्दका उदाहरण ।

"गांधर्व मकरध्वजदेवस्यास्त्रं जगद्विजये ।
इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते देशे ॥ "

### दूसरा और भी—

" हित्वा श्रुत्युपगीतं व्यापकमानन्दमात्मानम् ।
दुःखश्रेणिविदग्धे वत हत कनके रतिं कुर्मः ॥"

## उद्गीतिलक्षणम् ।

**आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ।**
**सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १० ॥**

**छ० टी०**—आर्याशकलद्वितयम्—आर्यायाः शकलद्वितयम् आर्याशकलद्वितय पूर्वोत्तरार्धरूपं खण्डद्वयम् । व्यत्ययरचितम्—व्यत्ययेन वैपरीत्येन रचितं व्यत्ययरचितम् । उत्तरार्द्धलक्षण पूर्वार्धे पूर्वार्धलक्षणमुत्तरार्धे रचित यस्या भवेत् किलेति निश्चित सा उद्गीतिर्गदिता—कथिता । किंविशिष्टा ? तद्वद्यत्यंशभेदसंयुक्ता—तद्वदार्यावत् यतिश्च अशश्च यत्यशौ विरामगणौ तयोर्भेदेन सयुता तद्वद्यत्यशभेदसयुक्ता ॥ १० ॥

**भा० टी०—आर्याके पूर्वार्धका लक्षण उत्तरार्धमें और उत्तरार्धका लक्षण पूर्वार्धमें जिसके हो वह "उद्गीति" कहाती है। उद्गीतिमें विराम और गण आर्याके समान ही रहते हैं ॥ १० ॥**

## उद्गीतिका उदाहरण।

" यस्याऽज्ञानसमुत्थं दुःखं कामादिकं यस्मिन्।
वेदोद्गीतेऽवगते नश्यति तस्मै नमो नमो भूयः ॥ "

## आर्यागीतिलक्षणम्।

**आर्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्।**
**इतरत्तद्वन्निखिलं यदीयमुदितेयमार्यागीतिः ॥ ११ ॥**

छ० टी०—आर्यापूर्वार्धम्—पूर्वञ्च तदर्धञ्च पूर्वार्धम् आर्यायाः पूर्वार्धम् आर्यापूर्वार्धम्। निधने—गोपेतसप्तगणान्ते। यद्येकेनाधिकेन गुरुणा—द्विमात्रिकेण। युक्त समन्वित स्यात्। इतरदन्यद्दलमुत्तरार्धमपि निखिल समस्त यदि तद्वदेव—पूर्वार्धवदेव भवति चेत्तर्हि इयमार्या गीतिरुदिता—गदिता। पूर्वार्धे चोत्तरार्धे द्वात्रिंशत्कलात्मिकार्यागीतिर्भवतीति पिङ्गलाचार्याणामपि सम्मतम्। "अर्धे वसुगण आर्यागीतिः" इति सूत्रपाठात्। माघेऽपि तथैवोदाहरणप्रदर्शनाच्च ॥ ११ ॥

भा० टी०—यदि आर्याका पूर्वार्धके ७ गण और १ गुरुके अन्तमें और भी एक अधिक गुरु युक्त हो अर्थात् आर्याके नियमानुसार ३० मात्राका जो पूर्वार्ध होता है सो ३२ मात्राका हो और इसीप्रकार पूर्वार्धके समान लक्षण युक्त ३२ मात्राका उत्तरार्ध भी हो तो वह आर्यागीति छन्द कहाता है ॥ ११ ॥

## आर्यागीतिका उदाहरण।

" अजमजरममरमेनं प्रत्यक्चैतन्यमीश्वरं ह्यानन्दम्[1]।
आत्मानं भावयतो भवमुक्तिस्स्यादितीयमार्यागीतिः ॥ "

॥ इति गीतिप्रकरणम् ॥

---

## वैतालीयलक्षणम्।

**षड् विषमेऽष्टौ समे कलाः ताश्च समे स्युर्नो निरन्तराः।**
**न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ १२ ॥**

छ० टी०—अत्र—वैतालीयवृत्ते। विषमे—विषमपादे प्रथमतृतीये चादौ षट्कलाः—षण्मात्रा भवन्ति। तथा समे—समपादे द्वितीये चतुर्थे। चादावष्टौ कला अष्टमात्रा भवन्तीति प्रथमो नियमः। च पुनस्ताः कला अष्टसंख्यकाः समे—द्वितीयचतुर्थरूपे समपादे। निरन्तराः—अन्तररहिता अव्यवधानेन सर्वाः

---

१ मीश्वर ब्रह्मपरमपि पाठ।

लघुरूपा एव । नो—न स्युर्न भवेयुः किन्तु दीर्घमिश्रिता एव स्युरिति द्वितीयो नियमः । अत्र वैतालीये समाः कलाः—सममात्रा द्वितीया तृतीया चतुर्थी षष्ठी अष्टमी च पराश्रिता परामग्रस्थामाश्रिता मिलिता पराश्रिता " द्वितीयाश्रितेति " सूत्रात्समासः न भवति किन्तु पूर्वाश्रिता भवति । अत्रेदमवधेयम्—द्वितीया मात्रा तृतीयाश्रिता न, चतुर्थी मात्रा पञ्चम्याश्रिता न, षष्ठीमात्रा सप्तम्याश्रिता न अष्टमी मात्रा च नवम्याश्रिता न किञ्च द्वितीया प्रथमाश्रिता चतुर्थी तृतीयाश्रितेति दिक् । लक्ष्ये स्फुटत्वादिति तृतीयो नियमः । अन्ते—विषमपादे षट्कलान्ते । समपादे—चाष्टकलान्ते । रलौ—रगणो लघुश्च ततो गुरुरेकः कार्यः । षण्मात्रान्तेऽष्टमात्रान्ते च रगणलघुगुरवो भवन्तीति चतुर्थो नियमश्चैव वैतालीयं सिद्ध्यति । वेतालशब्दात् कृशाश्वादेराकृतिगणत्वाच्छण्प्रत्ययश्चातुरर्थिकोऽत्र पादग्रहणं ज्ञापयत्यतश्चतुष्पादात्मकं वैतालीयम् ॥ १२ ॥

**भा० टी०—वैतालीय छन्दके विषम पादमें ( पहिले और तीसरे चरणके आदिमें ) ६ मात्रा और सम पादमें ( दूसरे और चौथे चरणके आदिमें ) ८ मात्रा हों । और वे २ रे तथा ४ थे चरणकी ८ मात्राएं भी सब लघुरूपही न हों किन्तु दीर्घ वर्णमिश्रित हों । तथा वैतालीय छन्दमें चारों ही चरणोंकी सममात्राएं जैसे २ री, ४ थी, ६ वी और ८ वी मात्रा आगेकी मात्रामें अर्थात् ३ री, ५ वी, ७ वी और ९ वी मात्रामें न मिलें तथा विषम पादमें ( १ ले ३ रे चरणमें ) ६ मात्राके अन्तमें और समपादमें ( २ रे ४ थे चरणमें ) ८ मात्राके अन्तमें रगण, लघु और गुरु हो । इस प्रकार वैतालीय छन्द बनता है॥१२॥**

### वैतालीयका उदाहरण ।

" शवशोणितपङ्कपाञ्चितं पुरुषान्त्रग्रथितोर्ध्वमूर्द्धजम् ।
वपुरन्तरवह्निदीपितं वैतालीयमिदं विलोक्यताम् ॥ "

### घटखर्परे च—

" निचितं खमुपेत्य नीरदैः प्रियहीनाहृदयावनीरदैः ।
सलिलैर्निहितं रजः क्षितौ रविचन्द्रावपि नोपलक्षितौ ॥ "

### औपच्छन्दसिकलक्षणम् ।

**पर्यन्ते र्यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥**

छ० टी०—पर्यन्ते–वैतालीयविषमपादे षण्मात्रान्ते समे चाष्टमात्रान्ते । र्यौ—रगणयगणौ स्तः । शेषं—सर्वमन्यल्लक्षणं तु । तथैव—वैतालीयवदेव ।

तच्छन्दः सुधीभिः--कविभिः । औपच्छन्दसिकम् उक्तं भणितमित्यर्थः । पिङ्गल-सूत्रमपि " गौपच्छन्दसिकम् " ( ४ । ३३ ) ॥ १३ ॥

भा० टी०—वैतालीय छन्दके ही विषम पादमें ६ मात्राके और सम पादमें ८ मात्राके अन्तमें रगण और यगण हो तो उसे " औपच्छन्दसिक" छन्द कहते हैं ॥ १३ ॥

### औपच्छन्दसिकका उदाहरण ।

" परमर्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम् ।
अनवस्थितमर्थलुब्धमारादौपच्छन्दसिकं जहाति मित्रम् ॥ "

### आपातलिकालक्षणम् ।

आपातलिका कथितेऽयं भाद्गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥[1]

छ० टी०--यदि विषमे षण्मात्रान्ते समेऽष्टमात्रान्ते । भाद् गुरुकौ--भगणात् परकौ गुरू भवतः । अथ--अनन्तरम् । अन्यत्--सर्वम् । पूर्ववत्--वतालीयवद्भवति । तदा इय आपातलिका कथिता--गदिता । वैतालीयमेव आपातलिका नाम वृत्त भवतीत्यर्थः ॥ १४ ॥

भा० टी०—यदि विषम चरणमें ६ मात्राके और सममें ८ मात्राके अन्तमें भगण तथा उससे आगे २ गुरु हों और समस्त लक्षण वैतालीयके समान ही हो तो यह " आपातलिका " कही गई है ॥ १४ ॥

### आपातलिका छन्दका उदाहरण ।

" पिङ्गलकेशी कपिलाक्षी वाचाटा विकटोन्नतदन्ती ।
आपातलिका पुनरेषा नृपति कुलेऽपि न भाग्यमुपैति ॥ "

### दक्षिणान्तिकालक्षणम् ।

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ १५ ॥

छ० टी०--यदि समस्तपादेषु वैतालीयचतुर्ष्वपि चरणेषु । द्वितीयलः—द्वितियो लघुः । तृतीययुक्—तृतीयेन लघुना साकं युज्यत इति तृतीययुक् द्वितीयमात्रा तृतीयाश्रिता भवतीत्यर्थः । तदा वैतालीयमेव दक्षिणान्तिका नाम छन्दो भवतीत्यर्थः । न समात्र पराश्रितेत्यस्यापवादरूपमिदं वृत्तम् ॥ १५ ॥

भा० टी०—यदि वैतालीय छन्दके चारों ही चरणोंमें दूसरी मात्रा तीसरी मात्रासे मिली हुई हो और शेष सर्व लक्षण वैतालीयके ही हों तो वह दक्षिणांतिका छन्द कहता है ॥ १५ ॥

---

१ अस्थिरेति भाव. ।

### दक्षिणान्तिका छन्दका उदाहरण।

" यदा नरो दक्षिणान्तिकप्रयाणकालेपि प्रभोरिमौ।
शिवेति वर्णौ सकृज्जपेत् स इन्द्रचन्द्रादिप्रथामियात् ॥"

### उदीच्यवृत्तिवृत्तलक्षणम्।

**उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ १६ ॥**

छ० टी०--अयुग्मयोः--वैतालीयस्यैवायुग्मयोर्विषमपादयोः प्रथमतृतीययोः। द्वितीयलः--द्वितीयो लघुः। अग्रेण--तृतीयेन लघुना सह। सक्तः--सम्मिलितः। सर्वमन्यच्च वैलीयवदेव लक्षणश्चेत्तदा उदीच्यवृत्तिवृत्त भवेत् ॥ १६ ॥

भा० टी०--वैतालीयके १ले और ३ रे चरणका दूसरा लघु तीसरे लघुके साथ मिला हो अर्थात् २ री मात्रा ३ री मात्रासे मिली हो और समस्त लक्षण वैतालीयके समान ही हो तो वह उदीच्यवृत्ति नामका छन्द हो॥१६॥

### उदीच्यवृत्तिछन्दका उदाहरण।

" उदीच्यवृत्तिः सुरापगा मणिकर्णितटभूमिभूषिता।
पुनातु मां पञ्चवाहिनी प्रथिता माधवबिन्दुसन्निधौ ॥ "

### प्राच्यवृत्तिलक्षणम्।

**पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥**

छ० टी०--युग्मयोः--वैतालीययुग्मयोस्समपादयोर्द्वितीयचतुर्थयोः पञ्चमः पञ्चमो लघुः पूर्वेण चतुर्थेन लघुना युतस्सर्वमन्यद्वैतालीयवद्भवति चेत्तदा प्राच्यवृत्तिः। उदिता--कथिता प्राज्ञैरिति शेषः ॥ १७ ॥

भा० टी०--यदि वैतालीय छन्दके २ रे और ४ थे चरणका ५ वां लघु पिछले (४ थे) लघुसे मिला हो अर्थात् ५ वी मात्रा ४ थी मात्रासे मिली हो और समस्त वैतालीयके समान ही हो तो वह " प्राच्यवृत्ति " नामका छन्द कहा गया है॥ १७॥

### प्राच्यवृत्ति छन्दका उदाहरण।

" दिननायककन्यया युता प्राच्यवृत्तिरथ जन्हुकन्यका।
कमलात्मजजानिषेविता सा पुनातु भवपाशभेदिनी ॥ "

### प्रवृत्तकलक्षणम्।

**यदा समावोजयुग्मकौ पूर्वयोर्भवानि तत् प्रवृत्तकम् ॥ १८ ॥**

छ० टी०--यदा ओजयुग्मकौ--वैतालीयस्यैवौजयुग्मकौ विषमसमपादौ। पूर्वयोः --पूर्वोक्तयोरुदीच्यवृत्तिप्राच्यवृत्त्योः। समौ--यथासङ्ख्येन तुल्यौ स्तः।

उदीच्यवृत्तिसमः प्रथमस्तृतीयः पादः प्राच्यवृत्तिसमो द्वितीयश्चतुर्थः पादो भवति तदा प्रवृत्तक नामच्छन्दो भवति ॥ १८ ॥

भा० टी०-यदि वैतालीयका प्रथम तृतीय चरण उदीच्यवृत्तिके और दूसरा तथा चौथा चरण प्राच्यवृत्तिके समान हो तो वह "प्रवृत्तक" नामका छन्द हो ॥ १८ ॥

### प्रवृत्तक छन्दका उदाहरण ।

" जयं भरतवंशभूभृतां श्रूयतां श्रुतिमनोरसायनम् ।
पवित्रमधिकं शुभोदयं व्यासवक्त्रकथितं प्रवृत्तकम् ॥ "

### अपरान्तिकालक्षणम् ।

## अस्य युग्मरचिताऽपरान्तिका ॥ १९ ॥

छ० टी०--अस्य--प्रवृत्तकस्य । युग्मरचिता—युग्मैश्चतुर्भिः समपादैः रचिता युग्मरचिता अपरान्तिका भवति । अयमाशयः=यस्याः प्रवृत्तकसमपादसमाश्चत्वारः पादाः सन्ति सा अपरान्तिका ज्ञेया ॥ १९ ॥

भा० टी०-जिसके प्रवृत्तक छन्दके समपादके समान चारों चरण हो उसे "अपरान्तिका" छन्द जानो ॥ १९ ॥

### अपरान्तिका छन्दका उदाहरण ।

" स्थिरविलासनतमौक्तिकावली कमलकोमलाङ्गी मृगेक्षणा ।
हरति कस्य हृदयं न कामिनः सुरतकेलिकुशलाऽपरान्तिका ॥"

### चारुहासिनीलक्षणम् ।

## अयुग्भवा चारुहासिनी ॥ २० ॥

छ० टी०--अस्य प्रवृत्तकस्यैव अयुग्भवा—अयुग्मैश्चतुर्विषमपादैर्भवः प्रादुर्भावो यस्याः सा अयुग्भवा चारुहासिनी कथ्यते ॥ २० ॥

भा० टी—प्रवृत्तक छन्दके विषम पादके समान जिसके चारों चरण हो सो " चारुहासिनी छन्द " कहाता है ॥ २० ॥

### चारुहासिनी छन्दका उदाहरण ।

" मनाक् प्रसृतदंतदीधितिः खरोल्लासितगण्डमण्डला ।
कटाक्षवलिता तु कामिनी मनो हरति चारुहासिनी ॥"

इति वैतालीयप्रकरणम् ॥

---

## वक्रलक्षणम् ।

**वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥**

छ० टी०—अनुष्टुभि--अष्टाक्षरपादजातौ । आद्यात्--पादस्याद्यात् प्रथमाक्षरात् । परौ नसौ--नगणसगणौ । न स्याताम्--न भवेताम् । तथा अब्धेः-चतुरक्षरात् परो यः--यगणो नियमेन स्यात् तत् वक्र नाम छन्दो भवेत्॥२१॥

भा० टी०—अनुष्टुप् (आठ अक्षरोंकी पाद जाति) छन्दमें प्रत्येक चरणके पहिले अक्षरसे आगे नगण और सगण नही हो तथा चौथे अक्षरसे आगे यगण अवश्य ही हो, वह " वक्र " नामका छन्द होता है ॥ २१ ॥

## वक्रछन्दका उदाहरण ।

" वक्त्रं संपूर्णचन्द्राभं लोके विख्यातमीशायाः ।
पूर्णश्चासौ मृगाङ्को न लक्ष्म्यानीतं न पूर्णत्वम् ॥ "

अन्यच्च–" दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः ।
मातुर्मनो हरन्त्येव दौर्लालित्योक्तिभिर्बालाः ॥"

## पथ्यावक्रलक्षणम् ।

**युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २२ ॥**

छ० टी०—युजोः--वक्रस्यैव समपादयोर्द्वितीयचतुर्थयोः । सरिद्भर्तुः--सागराच्चतुर्थाक्षरात् । जेन--जगणेन कृत्वा पथ्यावक्र नाम वृत्त प्रकीर्तितम्--कथितम् । विषमपादयोस्तु रचना वक्रवदेव ॥ २२ ॥

भा० टी०—वक्र छन्दके दूसरे चौथे चरणके चौथे वर्णसे परे जगण होने पर " पथ्यावक्र " नामका छन्द कहाता है। इसके विषम पाद ( १ ला और ३ रा चरण ) वक्रके समान ही रहना चाहिये ॥ २२ ॥

## पथ्यावक्रका उदाहरण ।

" पार्वतीमौषधीभिकामपर्णां मृगयामहे ।
शूली हालाहलं पीत्वा यया मृत्युञ्जयो भवेत ॥
वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥
नित्यं नीतिनिषण्णस्य राज्ञो राष्ट्रं न सीदति ।
नहि पथ्याशिनः काये जायन्ते व्याधिवेदनाः ॥"

## विपरीतपथ्यावक्रलक्षणम् ।

**ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ १३ ॥**

छ० टी०—ओजयोः—वक्रस्यैव विषमपादयोः प्रथमतृतीययोः । वारिधेः—चतुर्थाक्षरात् । जेन—परेण जगणेन । कृत्वा तदेव विपरीतादि—विपरीत विपरीतशब्दमादौ यस्य तत् विपरीतादि । विपरीतपथ्यावक्त्र नाम छन्दो भवति । समपादयोस्त्वत्र रचना वक्त्रवदेव ॥ २३ ॥

भा० टी०—वक्त्रछन्दके विषम पाद ( १ ले और ३ रे चरण ) के चौथे अक्षरसे परे जगण हो और समपाद ( २ रा तथा ४ था चरण ) वक्त्रके समान ही हो तो वह " विपरीतपथ्यावक्त्र " नामक छन्द कहाता है ॥ २३ ॥

## विपरीतपथ्यावक्त्रका उदाहरण ।

" भर्तुराज्ञानुवर्तिनी या स्त्री तस्याः स्थिरा लक्ष्मीः ।
स्वप्रभुत्वाभिमानिनी विपरीता परित्याज्या ॥ "

## चपलावक्त्रलक्षणम् ।

**चपलावक्त्रमयुजोर्नकारश्चेत् पयोराशेः ॥ २४ ॥**

छ० टी०—अयुजोः—वक्त्रस्यैवायुजोः—विषमपादयोः। पयोराशेश्चतुर्थाक्षरात् । नकारः—परो नगणश्चेत् । समपादयोस्तु वक्त्रवदेव रचना, चतुर्थाक्षरात् परो यगणो भवेदित्यर्थः । तदा चपलावक्त्र नाम वृत्त भवति ॥ २४ ॥

भा० टी०—यदि वक्त्र छन्दके १ ले और ३ रे चरणके चौथे अक्षरसे परे नगण हो और समपाद ( २ रे और ४ थे चरण ) में चौथे वर्णसे परे यगण ही हो तो वह " चपलावक्त्र " छन्द कहाता है ॥ २४ ॥

## चपलावक्त्र छन्दका उदाहरण ।

" क्षीयमानाग्रदशना वक्त्रनिर्मांसनासाग्रा ।
कन्यका वाक्यचपला भजते धूर्तसौभाग्यम् ॥ "

## युग्मविपुलालक्षणम् ।

**यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥**

छ० टी०—यस्यामनुष्टुभि युग्मे—समपादे । सप्तमः—सप्तमोऽक्षरः । लः लघुः ( । ) स्यात् विषमपादे तु तुर्याक्षरात् परो यगण एव स्यात् । सा—अनुष्टुप् । युग्मविपुला मताऽभिप्रेतेत्यर्थः । ननु पथ्यावक्त्रलक्षणान्तर्भूतत्वात् पौनरुक्त्यमेतदिति चेन्न, विपुलाऽधिकारस्येदानीमादिश्यमानत्वात्तद्विनाऽनुपपत्तेः ॥ २५ ॥

भा० टी०—जिस अनुष्टुप् ( ८ अक्षरके चरणवाले ) छन्दके समपाद ( २ रे और ४ थे चरण ) में सातवां अक्षर लघु हो। और विषमपाद ( १ले और

२ रे चरण ) के ४ थे वर्णसे आगे यगण ही हो तो उसे "युग्मविपुला" नामक छन्द जानो ॥ २५ ॥

युग्मविपुलाका उदाहरण ।

"विपुलश्रोण्युरुस्फिग् या चन्द्रास्या विपुलस्तनी ।
विपुलानन्ददा नारी सा युग्मविपुला मता ॥"

सैतवस्याखिलेष्वपि ॥ २६ ॥

छ० टी०--मतान्तरमाह । सैतवस्य--सैतवाचार्यस्य मते । अखिलेषु--चतुर्ष्वपि पादेषु । सप्तमो वर्णो लघुरेव कर्तव्यः सा युग्मविपुला भवति ॥ २६ ॥

भा० टी०–विशेषता सैतवाचार्यके मतमें वह युग्मविपुला मानी गई है कि जिसके चारों चरणोंमें सातवां अक्षर लघु (ह्रस्व) ही हो ॥ २६ ॥

चारों चरणोंमें ह्रस्वाक्षरवाली युग्मविपुलाका उदाहरण ।

"सैतवेन पथार्णवं तीर्त्वा दशरथात्मजः ।
रक्षःक्षयकरी पुनः प्रतिज्ञां कृतवान् विभुः ॥"

भविपुलालक्षणम् ।

भेनाब्धितो भाद्विपुला ॥ २७ ॥

छ० टी०--अत्र सैतवस्येति निवृत्तम् चपलावक्त्रमयुजोरित्यस्मादयुजोरित्यनुवर्तनीयम् यस्यां लः सप्तमो युग्मेऽस्माद्युग्मे सप्तमो ल इत्यनुवर्तनीयम् । चार्थस्तु विपुलायामेवायुजोः--विषमपादयोः प्रथमतृतीययोः । अब्धित--चतुर्थाक्षरात् । भेन--परेण भगणेन । समपादे तु सप्तमो लघुश्चेत् तदा भात्--भकाराद्युत्तरा विपुला-भविपुला नाम छन्दो भवतीत्यर्थः ॥ २७ ॥

भा० टी०–जो विपुलाके विषमपाद (१ ले और ३ रे चरण) के ४ थे वर्णसे आगे भगण (ऽ।।) हो और समपाद (२ रे और ४ थे चरण) में ७ वां लघु वर्ण ही हो तो वह "भविपुला" छन्द कहाता है ॥ २७ ॥

भविपुलाका उदाहरण ।

"चन्द्रानना मानवती-भकुंभविपुलस्तनी ।
मनोहरा हंसगमा कस्य न स्याद्रतिप्रदा ॥"

रविपुलालक्षणम् ।

इत्थमन्या रश्चतुर्थात् ॥ २८ ॥

छ० टी०–इत्थ--पूर्वोक्तप्रकारेण । विषमपादयोश्चतुर्थात्--चतुर्थाक्षरात् ।

रः--परो रगणो ( ऽ ऽ । ) भवति समपादयोश्च सप्तमो लघुरेव तदा अन्या--भविपुलावदन्या रविपुला भवतीत्यर्थः ॥ २८ ॥

भा० टी०-पूर्वोक्तरीत्यनुसार विषम पादके ४थे वर्णसे आगे रगण ऽ । ऽ हो और समपादमें ७ वां वर्ण लघु ही हो तो वह "रविपुला" छन्द कहाता है२८

रविपुलाका उदाहरण ।

" महाबलो वेगगामी हनूमानञ्जनी सुतः ।
नदन्नुग्रं दीर्घबाहुस्ततार विपुलांबुधिम् ॥ "

नविपुलालक्षणम् ।

नोऽम्बुधेश्चेन्नविपुला ॥ २९ ॥

छ० टी०--अयुग्मपादयोः अम्बुधेश्चतुर्थाक्षरान्नः--नगणश्चेत् । समपादयोस्तु सप्तमो लघुरेव सा नविपुला भवति ॥ २९ ॥

भा० टी०- पूर्वोक्त प्रकारानुसार विषम पादके ४ थे अक्षरसे आगे नगण ( ।।। ) हो और समपादमें ७ वां वर्ण लघु ही हो तो उसे " नविपुला " छन्द जानो ॥ २९ ॥

नविपुलाका उदाहरण ।

" सुंदरी मानविपुला पूर्णचन्द्रनिभानना ।
कुरङ्गाक्षी पृथुतरस्तनी राजति रागिणी ॥ "

तविपुलालक्षणम् ।

तोऽब्धेस्तत्पूर्वान्या भवेत् ॥ ३० ॥

छ० टी०—यत्र विषमपादयोः-अब्धेः चतुर्थाक्षरात् । तः--परस्तगणः ऽ ऽ । समपादयोः सप्तमो वर्णो लघुरेव सा अन्या तत्पूर्वा—तगणः पूर्वो यस्यां सा तत्पूर्वा तविपुला भवतीत्यर्थः । अत्रेदमवधेयम्—वक्त्रादीनां तविपुलान्तानां परस्परसंहत्या बहवो भेदा ऊहनीयाः ॥ ३० ॥

भा० टी०-यदि विषम पादके ४ थे वर्णसे आगे तगण ऽ ऽ । हो और समपादमें ७ वां वर्ण लघु ही हो तो वह "तविपुला" नामक छन्द कहाता है३०

तविपुलाका उदाहरण ।

वन्दे देवं सोमेश्वरं जटामुकुटमंडितम् ।
खट्वाङ्गधरं चन्द्रमःशिखामणिविभूषितम् ॥ "

इत्यनुष्टुप्प्रकरणम् ॥

---

## अचलधृतिलक्षणम्।

### द्विकगुणितवसुलघुरचलधृतिरिति ॥ ३१ ॥

छ० टी०—द्विकगुणितवसुलघुः—द्वावेव द्विकौ द्विकाभ्यां गुणिताः द्विकगुणिताः द्विगुणिताः वसवोऽष्टौ लघवो यस्या सा द्विकगुणितवसुलघुः षोडशलघुः। अचलधृतिः इति--षोडशलघ्वक्षरात्मकमचलधृतिर्नामछन्दोभवतीत्यर्थः। पिङ्गलाचार्यैस्त्विय गीत्यार्येत्युक्ता। अत्रारभ्याधिकारसमाप्तिपर्यन्तमेकैकस्यैव पादस्य लक्षणमुक्तम्, तत्समानमेवान्येषामपि पादत्रयाणां लक्षण बोध्यम्। चतुर्ष्वपि पादेषु मात्राणां समानत्वादेवैतन्मात्रासमप्रकरणमुच्यते ॥ ३१ ॥

**भा० टी०—अचलधृतिका जिसके प्रत्येक चरणमें सोलह लघु ( ह्रस्व ) वर्ण हो सो "अचलधृतिनामक" छन्द कहाता है। इसीको पिङ्गलाचार्यजीने गीती आर्यानामका छन्द कहा है ॥ ३१ ॥**

## अचलधृतिका उदाहरण।

"मदकलखगकुलकलरवमुखरिणि। विकसितसुरभितपरिमल सुरभिनि।
गिरिवरपरिसरसरसि महति खलु। रतिरतिशयमिह मम हृदि विलसति ॥"

## मात्रासमकलक्षणम्।

### मात्रासमकं नवमो ल्गान्तम् ॥ ३२ ॥

छ० टी०—पिङ्गलाचार्यैः "गान्ता द्विर्वसवो मात्रासमकलनवमः" इत्युक्तत्वादत्राधिकारे मात्राः षोडशैव भवन्ति ताश्च कविभिर्यथेच्छ गुरुलघुमिश्रिताः कार्यास्तासु या नियम्यते सा नियमोक्तैव कार्येति नियमः। श्लोकार्थस्तु यस्य नवमः—षोडशमात्रासु नवमो मात्राभागः। ल्—लघुर्भवति तन्मात्रासमकं नाम छन्दो भवति किंविशिष्ट छन्दः? गान्तम्—ग अन्तेऽवसाने यस्य तद्गान्तम्। मात्रासमकमस्य गान्तमिति विशेषण ज्ञेयम् ॥ ३२ ॥

**भा० टी०—मात्रासमाधिकारमें गुरु लघुमिश्रित १६ मात्रा ही प्रत्येक चरणमें होती हैं। जिस छन्दके प्रत्येक चरणमें १६ मात्राओमेंसे ९ वी मात्रा स्वतन्त्र लघुरूपा ( केवल ह्रस्वाक्षरवाली ) हो और अन्तही अन्तमें गुरु वर्ण ( दीर्घाक्षर ) ही तो उसे "मात्रासमक" नामक छन्द जानो ॥ ३२ ॥**

## मात्रासमकका उदाहरण।

"धूलीधूसरकृततनुशोभः प्रकटितनूतनदशनद्वन्द्वः।
प्रमुदितवदनो जटिलशिरस्कः खेलति मात्रासमकं वालः ॥

पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ।
इह संसारे खलु दुस्तारे कृपया पारे पाहि मुरारे ॥ "

## विश्लोकलक्षणम् ।

### जो नोथवाम्बुधेर्विश्लोकः ॥ ३३ ॥

छ० टी०-यत्र अम्बुधेः--मात्राचतुष्टयात् । परो जः--जगणः । अथवेति पक्षान्तरे वा । नः--नगणो भवति । स विश्लोकः--विश्लोकनाम छन्दो भवति । शेषं सर्व पूर्वदेव लक्षणं ज्ञेयम् ॥ ३३ ॥

भा० टी०-जिसके प्रत्येक चरणमें ४ मात्रासे आगे जगण ( । ऽ । ) हो अथवा नगण ( ।।। ) हो तो वह " विश्लोक " नामका छन्द होता है शेष लक्षण पूर्वके समान ही जानो ॥ ३३ ॥

## जगणके विश्लोकका उदाहरण ।

" मा कुरु गुरोः कदाप्यपमानं कर्तुस्तपोयशःश्रीज्ञानम् ।
नश्यति बलं सखे सद्दानं माश्वं पठात्र शक्राख्यानम् ॥ " ( मत्कृति )

## नके विश्लोकका उदाहरण ।

" भ्रातर्गुणरहितं विश्लोकं दुर्नयकरणकदर्थितलोकम् ।
जातं महति कुलेऽप्यवनीतं मित्रं परिहर साधु विगीतम् ॥ "

## वानवासिकालक्षणम् ।

### तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥

छ० टी०-तद्युगलात्-तस्याम्बुधेर्युगल तद्युगल तस्मात्तद्युगलात् । अष्टाभ्यो मात्राभ्यः परो जगणो नगणो वा स्यात्तदा वानवासिकानाम छन्दो भवति ॥ ३४ ॥

भा० टी०-आठमात्रासे आगे जगण ( । ऽ । ) अथवा नगण ( । । । ) हो तो वह वानवासिका नामका छन्द होता है शेष लक्षण पूर्ववत् ॥ ३४ ॥

## ( ज ) वानवासिकाका उदाहरण ।

" साध्वी सीता रमांशजाता जनको जनको धरा सुमाता ।
यस्या रामो धवो नृपाता चित्रं चैतद् वने प्रयाता ॥ " ( मत्कृतिः )

## ( न ) वानवासिकाका उदाहरण ।

" मन्मथचापध्वानेरमणीयः सुरतमहोत्सवपटहानेनादः ।
वनवासस्त्रीस्वनितविशेषः कस्य न चित्तं रमयति पुंसः ॥ "

## चित्रालक्षणम् ।

### वाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥

छ० टी०—यदि—यदा । बाणाष्टनवसु—पञ्चमाष्टमनवमेषु मात्रास्थानेषु । लः लघुर्भवति । तदा चित्रा नाम छन्दः स्यात् ॥ ३५ ॥

भा० टी०—यदि ५ वीं, ८ वीं और ९ वी मात्राके स्थानमें ह्रस्व अक्षर हो तो वह "चित्रा" छन्द जानो ॥ ३५ ॥

## चित्राका उदाहरण ।

"यदि वाञ्छसि परपदमारोढुं मैत्रीं परिहर सह वनिताभिः ।
मुह्यति मुनिरपि विषयासङ्गाच्चित्रा भवति हि मनसो वृत्तिः ॥"

## उपचित्रालक्षणम् ।

नवमे भवति गुरावुपचित्रा ॥ ३६ ॥

छ० टी०—नवमे—नवममात्रास्थाने । गुरौ—द्विमात्रिके दीर्घाक्षरे सति उपचित्रा भवति । नवमे गुरावित्यनेन नवममात्रायाः परयुक्तत्व सूचितम् । तथा च सूत्रम्—"परयुक्तेनोपचित्रा—४-४६" ॥ ३६ ॥

भा० टी०—यदि ९ वी मात्राके स्थानमें गुरु ( दो मात्रावाला दीर्घाक्षर ) हो तो वह "उपचित्रा" छन्द जानो यहां गुरु अक्षरके कहनेसे यह बात सिद्ध होती है कि उपचित्रा छन्दमें ९ वी मात्रा १० वी मात्राके साथ मिली रहती है ॥ ३६ ॥

## उपचित्राका उदाहरण ।

"यच्चित्तं गुरुसक्तमुदारं विद्याभ्यासमहाव्यसनं वा ।
पृथ्वी तस्य गुणैरुपचित्रा चन्द्रमरीचिनिभैर्भवतीयम् ॥"

## पादाकुलकलक्षणम् ।

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ।
अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम् ॥ ३७ ॥

छ० टी०—यत्—यद्वृत्तम् । मात्रासमादिपादैः—मात्रासमा आदौ येषा तानि मात्रासमादीनि छन्दांसि मात्रासमादीना मात्रासमक-विश्लोक-वानवासिका-चित्रोपचित्राछन्दसाम् । पादैः—पञ्चानामपि यैः कैश्चिदपि चतुर्भिश्चरणैः । कलितम्—रचितम् । तद्वृत्त जगत्सु—लोकेषु । पादाकुलक प्रथित—ख्यातम् । किंविशिष्टैः पादैः अतीतकृतविविधलक्ष्मयुतैः—अतीत कृतम् अतीतकृतं पूर्वकृत यद्विविध विचित्रं लक्ष्म लक्षणं तेन युतैः युक्तैरित्यर्थः । किंविशिष्टम् पादाकुलकम् अनियतवृत्त-

परिमाणसहितम् अनियतं मर्य्यादारहितमनिश्चितं । अवृत्तानां—मात्रासमादीनां । परिमाणं तेन सहित—समन्वितमित्यर्थः ॥ ३७ ॥

भा० टी०—जो छन्द १ मात्रासमक २ विश्लोक ३ वानवासिका ४ चित्रा और ५ उपचित्रा इन पांचो छन्दोंमें चाहे जिसका एक एक चरण लेकर ४ चार चरणोसे रचागया हो वह छन्द लोकमें "पादाकुलक" कहाता है॥३७॥

पादाकुलकका उदाहरण।

"दक्षिणमारुतचलिताशोके कोकिलकलरवमुदिते लोके।
मुग्धे मन्मथसुहृदि वसन्ते पादाकुलकं याति पतिस्ते ॥
अन्यच्च—" कोऽहं कस्त्वं कुत आयातः का ते जननी कस्ते तातः।
इति परिभावय सर्वासारं सर्वं त्यक्त्वा स्वप्नविचारम् ॥ "

इति मात्रासमकप्रकरणम् ॥

---

गुरुलघुज्ञानाक्रिया ।

वृत्तस्य लो विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥३८ ॥

छ० टी०—निखिलवृत्तानां गुरुलघुज्ञानार्थं क्रियामाह । वृत्तस्य—गुरुलघुज्ञातुमिष्टस्य यस्यकस्यापि छन्दसः । लः—सर्वमात्रासख्याङ्करूपा लघवः । वर्णैः—वृत्ताक्षरसंख्याङ्कैः । विना —रहिताः । गाः गुरवः गुरुसख्याङ्का भवन्ति । गुरुभिः—गुरुसख्याङ्कैः । विना—रहितास्त एव मात्रासख्यारूपा लघवः वर्णाः वृत्ताक्षरसख्यांका भवन्ति । तथा—तथैव । गुरुभिः—गुरुसंख्याङ्कैः । विना—रहिताः । वर्णाः—वृत्ताक्षरसख्याङ्काः ।,लः—लघुसख्याङ्काः भवन्तीत्येका क्रिया ॥ द्वितीयाश्चाह ॥ त एव सर्वमात्रासंख्याङ्करूपा लघवः । लैर्लघुभिः लघुसख्याङ्कैः । विना—रहिताः । पुनस्तेषा दलेऽर्द्धे—अर्द्धसख्याङ्के कृते सति तत्संख्याङ्काः । गुरवः—गुरुसख्याङ्का भवन्तीति । नित्यम्—अजस्रम् । प्रमाणम्—गुरुलघुप्रमाणम् । निश्चित—निर्णीतमित्यर्थः । अत्र पृथग्विनानानाभिस्तृतीयान्यतरस्यामित्यनेन तृतीया ॥ ३८ ॥

भा० टी०—क्रिया १ ली—जिस किसीछन्दके गुरु लघु जानना हो उसकी पहिले गुरु और लघुरूप समस्त मात्राओकी लघुरूपसंख्या कर लो उस लघुरूप की हुई मात्रासंख्यामें छन्दकी वर्णसंख्या घटानेसे शेषाङ्क गुरुसंख्या होगी यह गुरुसंख्या पूर्वोक्तमात्रासंख्यामें घटानेसे शेष वर्णसंख्या और वर्णसंख्यामें घटानेसे शेष लघुसंख्या होगी, इस प्रकार प्रत्येक छन्दके गुरुलघुवर्ण जानलेना चाहिये ।

क्रिया २ री–लघुरूप की हुई मात्रासंख्यामें छन्दके लघु वर्णोंकी संख्या घटानेसे जो शेषसंख्या रही उसकी आधी संख्या करो वही गुरुसंख्या होगी इस प्रकार गुरु लघुके जाननेका प्रमाण नित्य निश्चित किया गया है॥ २८॥

## उदाहरण।

"माधवोमाधवावीशौ सर्वसिद्धिविधायिनौ।
वन्दे परस्परात्मानौ परस्परनुतिप्रियौ॥"

१ ली क्रिया– इस छन्दमें कुल मात्रासंख्या ५१ है इसमें छन्दकी वर्णसंख्या ३२ घटानेसे शेष अङ्क १९ रहे यह १९ गुरुसंख्या हुई (इस छन्दमें १९ गुरु है) इस गुरुसंख्या १९ को पूर्वमात्रासंख्या ५१ में घटानेसे शेषाङ्क ३२ रहे यह ३२ वर्णसंख्या हुई (इस छन्दमें ३२ वर्ण है) इस वर्णसंख्या ३२ में गुरुसंख्या १९ घटानेसे शेषाङ्क १३ लघुसंख्या हुई इस क्रियासे यह जाना-गया कि इस छन्दमें १९ गुरु और १३ लघु है। यह १ली क्रिया हुई॥

२ री क्रिया– मात्रासंख्या ५१ में लघुवर्ण १३ संख्या घटानेसे शेष संख्या ३८ रही इसकी आधी संख्या की गई तो १९ हुई. यह १९ गुरुसंख्या जानो इस २ री क्रियासे गुरुसंख्या निकाल पूर्व १ ली क्रियानुसार वर्ण संख्या निकाललो॥

## शिखालक्षणम्।

**शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम्।**
**सगुरु शकलयुगलकमपि सुपरिघटितललितपदनिचिति भवति शिखा॥**

छ० टी०–शिखा अस्यास्तीति शिखी वह्निस्त्रिसख्यावाचकोऽग्निः शिखिभिस्त्रिभिर्गुणिता दश लघवः शिखिगुणितदशलघवः शिखिगुणितदशलघुभिः त्रिंशल्लघुभिः रचित यत्तत् शिखिगुणितदशलघुरचितम्। पुनः किं विशिष्टम्? अपगत लघ्वोर्युगल यस्मात्तत् अपगतलघुयुगलम् अष्टाविंशतिलघुरचितमित्यर्थः। इद–पूर्वार्धम्। अपरम्–उत्तरार्धम्। अखिलं–समग्रं त्रिंशल्लघुयुतमेवेत्यर्थः। तथा शकलयुगलक–पूर्वोत्तरार्धद्वयमपि। सगुरु–गुरुणा सहितं यत्तत् सगुरु पूर्वार्धेऽष्टाविंशतिलघुवर्णान्ते चोत्तरार्धे त्रिंशल्लघुवर्णान्ते गुरुः इत्यर्थः। तथा सु शोभनप्रकारेण परिघटितानां ललितानां पदानां निचितिः समूहो. रचना वा यत्रेति तत् सुपरिघटितललितपदनिचिति। शिखा–शिखा नाम छन्दो भवतीत्यर्थः॥ ३९॥

भा० टी०–जिसके पूर्वार्ध (१ ले दल) में २८ लघुवर्णोंके अन्तमें १ गुरु होय और उत्तरार्ध (२ रे दल) में ३० लघु वर्णोंके अन्तमें गुरु होय वह "शिखा" छन्द कहाता है॥ ३९॥

शिखाका उदाहरण । ( मत्कृतिः)

" जय जय सुरवर भव भवभयहर शशधर धररुजमुपहर मे ।
त्रिनयन खलदलदहन सुमतिकर दशकर सुखकर वस हर हृदि मे ॥ "

खञ्जालक्षणम् ।

विनिमयविहितशकलयुगललघु ललितपदविततिरचितगणनिचया ।
श्रुतिसुखकृदियमपि जगति जशिरउपगतवति ञि सति भवति खजा॥

छ० टी०—इय—शिखैव । विनिमयेन व्यत्ययेन विहितं यत् शकलयुगलं दलद्वय पूर्वोत्तरार्द्धम् । तस्य लघवस्तैर्ललितानि यानि पदानि तेषां विततिः श्रेणिस्तथा रचितो निवद्धो गणनिचयो गणसमूहो यस्या सा विनिमयविहितशकलयुगललघुपदविततिरचितगणनिचया । श्रुतेः श्रवणस्य सुखं करोतीति श्रुतिसुखकृत् श्रवणसुखकारिणीत्थभूता । जगति—लोके । खजा भवति । क्व सति ञि—चवर्गपञ्चमाक्षरे ञकारे । जस्य—खजाशब्दस्थितजकारस्य । शिरः—ऊर्ध्वभागस्तम् उपगतवति सति । खजेत्यस्य जकारोर्ध्वभागे ञयोगे खजापि खञ्जा नाम छन्दोभवतीत्यर्थः ॥ ४० ॥

भा० टी०- जो शिखाका पूर्वार्ध ( १ लाभाग ) उत्तरार्धकी जगह और उत्तरार्ध ( २ रा भाग ) पूर्वार्धकी जगह हो तो वह " खंजा " छन्द कहाता है ॥ ४० ॥

खंजाका उदाहरण । ( मत्कृतिः )

" कमलजनुतपदकमल कमलकर करधृतदरवर खलु सुजनकृते ।
श्रुतिपथरत सदवितुमिह भवति हि कमलनयन भुवि जनिरजते ॥ "

अनङ्गक्रीडालक्षणम् ।

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता । दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदवितति भवति ॥ ४१॥

छ० टी०—यस्या अर्धे—पूर्वार्द्धे । अष्टौ गा गुरवो भवन्ति। किं विशिष्टा गाः[1] द्वाभ्यामभ्यस्ता गुणिता द्व्यभ्यस्ताः द्विगुणिताः षोडशेत्यर्थः । अपरं दलम्—उत्तरार्धम् अपि । वसुगुणितैः—अष्टगुणितैः । सलिलनिधिभिश्चतुर्भिर्लघुकैः द्वात्रिंशल्लघुभिः विरचिता पदानां विततिः श्रेणिर्यस्मिन् तत् वसुगुणितसलिलनिधिलघुकविरचितपदवितति । सा अनङ्गक्रीडा उक्ता कविभिरिति शेषः । अनङ्गक्री-

---

1 हे भव ।

डायाः पूर्वार्द्धे षोडश गुरवश्चोत्तरार्धे द्वात्रिंशल्लघवो भवन्तीति. नियमः । पिङ्गला-चार्यैस्सौम्यशिखेयमुक्ता ॥ ४१ ॥

भा० टी०-जिसके पूर्वार्धमें १६ गुरु (दीर्घ) वर्ण और उत्तरार्धमें ३२ लघु (ह्रस्व) वर्ण हो सो "अनंगक्रीडा" नामक छन्द कहा गया है ॥ ४१ ॥

### अनंगक्रीडाका उदाहरण ।

"आत्मज्योतिर्योगाभ्यासाद् दृष्ट्वा दुःखच्छेदं कुर्यात् ।
यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रतिमतिशयमिह ॥"

### अतिरुचिरालक्षणम् ।

त्रिगुणनवलघुरवसितिगुरुरिति दलयुगकृततनुरतिरुचिरा ॥ ४२॥

इति श्रीकेदारभट्टकृते वृत्तरत्नाकरे मात्राप्रकरणे द्वितीयोऽध्यायः ॥

छ० टी०--त्रिभिर्गुणितास्त्रिगुणास्त्रिगुणा नव सप्तविंशतिसंख्यकाः लघवो यस्या सा त्रिगुणनवलघुः अवसितौ सप्तविंशतिलघ्ववसाने गुरुर्यस्यास्सा अवसिति-गुरुः । इति -एवम । दलयुगेन खण्डद्वयेन--पूर्वोत्तराभ्यां । कृता तनुराकृतिर्यस्याः सा दलयुगकृततनुः समानोभयदलेत्यर्थः । अतिरुचिरा—अतिरुचिरा नाम छन्दो भवति ॥ ४२ ॥

भा० टी०-जिसके पूर्वार्ध और उत्तरार्ध दोनोंहीमें सत्ताईस सत्ताईस लघु (ह्रस्व) वर्णके अंतमें एक एक गुरु (दीर्घ) वर्ण हो वह "अतिरुचिरा" नामक छन्द कहाता है ॥ ४२ ॥

### अतिरुचिराका उदाहरण ।

जनप जयति जगदघहर तव हि जलधरतनुछविरतिरुचिरा ।
व्रजजनसुखकर गिरिधर जगति सुरनरमुनिवरहृदयहरा ॥ (मत्कृतिः)

इति श्रीकविराजदाधीचपण्डित ज्ञारसरामशास्त्रिविरचितायां
छन्दःसुबोधिन्या सरलाया च मात्राप्रकरणनिरूपणं
नाम द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः ।



## श्रीछन्दोलक्षणम् ।

१ उक्तायाम्—गः श्रीः ॥ १ ॥

छ० टी०—अथोक्तादिक्रमेण वर्णवृत्तानि कथ्यन्ते । तत्रादौ श्रीछन्दोलक्षणम् । उक्तायामेकाक्षरपादजातौ प्रतिचरणे यदैको गः—गुरुः । भवति तदा श्रीः—श्रीनाम छन्दस्स्यात् ॥ १ ॥

भा०टी०—अब पूर्वोक्त उक्ता आदिके क्रमसे वर्ण छन्दोको कहते हैं इनमें १ चरणके समान ही ४ रो चरणोके लक्षण जानो । श्रीछन्दका लक्षण—१उक्ता ( एक अक्षरके चरणवाली ) जातिमें प्रत्येक चरणमें एक एक गुरु ( ४ रो चरणमें ४ गुरु ) हो तो वह "श्रीछन्द" कहाता है ॥ १ ॥

### श्रीछन्दका उदाहरण ।

"श्रीस्ते सा स्यात् ॥"

## स्त्रीछन्दोलक्षणम् ।

२ अत्युक्तायाम्—गौ स्त्री ॥ २ ॥

छ० टी०—अत्युक्तायां—द्व्यक्षरपादजातौ । गौ—प्रतिपादे द्वौ गुरू स्तः । तदा स्त्रीनाम छन्दः स्यात् ॥ २ ॥

भा० टी०—अत्युक्ता ( दो अक्षरके चरणवाली ) जातिमें प्रत्येक चरणमें दो दो गुरु ( ४ रों चरणमें ८ गुरु ) हो तो वह " स्त्री छन्द " जानो ॥ २ ॥

### स्त्रीछन्दका उदाहरण ।

" धीश्चेत्पुंसः । श्रीः स्त्री च स्यात् ॥ " ( मत्कृतिः )

## नारीछन्दोलक्षणम् ।

३ मध्यायाम्—मो नारी ॥ ३ ॥

छ० टी०—मध्याया—त्र्यक्षरपादजातौ । यदा मः—मगणः ऽ ऽ ऽ तदा नारीनाम छन्दः स्यात् ॥ ३ ॥

भा० टी०—मध्या ( ३ अक्षरके चरणवाली ) जातिमें यदि प्रत्येक चरणमें मगण( ऽ ऽ ऽ ) ही हो तो वह "नारीछन्द" जानो ॥ ३ ॥

### नारीछन्दका उदाहरण ।

" संसारे या साध्वी । सा धन्या वै नारी ॥ " (मत्कृतिः )

मृगीछन्दोलक्षणम्।

**रो मृगी ॥ ४ ॥**

छ० टी०–मध्यायामेव प्रत्येकपादे यदि रः–रगणो भवति ऽ।ऽ तदा मृगीछन्दः स्यात् ॥ ४ ॥

भा० टी०–जो मध्या (३ अक्षरके चरणवाली) जातिके प्रत्येक चरणमें रगण (ऽ।ऽ) ही हो तो वह "मृगीछन्द" जानो ॥ ४ ॥

मृगीछन्दका उदाहरण।

"सा मृगी प्रेक्षणा। पार्वती पातु नः ॥"

कन्याछन्दोलक्षणम्।

**४ प्रतिष्ठायाम्–म्गौ चेत्कन्या ॥ ५ ॥**

छ० टी०–प्रतिष्ठायाम्–चतुरक्षरपादजातौ। म्गौ–म् च गश्च म्गौ मगणश्चैकगुरुः प्रतिपादे चेत्तदा कन्या–कन्याच्छन्दो भवति ॥ ५ ॥

भा० टी०–यदि प्रतिष्ठा (४ अक्षरके चरणवाली) जातिके प्रत्येक चरणमें मगण (ऽऽऽ) और एक गुरु हो तो वह "कन्या छन्द" कहता है ॥ ५॥

कन्याछन्दका उदाहरण।

"भास्वत्कन्या सैका धन्या। यस्याः कूले कृष्णोऽखेलत्" ॥

पङ्क्तिछन्दोलक्षणम्।

**५ सुप्रतिष्ठायाम्–भ्गौ गिति पंक्तिः ॥ ६ ॥**

छ० टी०–सुप्रतिष्ठाया–पञ्चाक्षरपादजातौ। गश्च गश्च गौ भ् च गौ च भ्गौ–भगणो ऽ॥ गुरुद्वय च प्रतिपादे स्यात् तदा पङ्क्तिच्छन्दः स्यात् ॥ ६ ॥

भा० टी०–यदि सुप्रतिष्ठा (५ वर्णके चरणवाली) जातिके प्रत्येक चरणमें भगण (ऽ।।) और २ गुरु हो तो वह "पंक्तिछन्द" कहाता है ॥ ६ ॥

पंक्तिछन्दका उदाहरण।

"नीरदपंक्तिश्यामलदेहम्। माधवमेकं पूजय देवम् ॥"

तनुमध्याछन्दोलक्षणम्।

**६ गायत्र्याम्–त्यौ स्तस्तनुमध्या ॥ ७ ॥**

छ० टी०–यदा गायत्र्यां–षडक्षरपादजातौ। त्यौ–तगण (ऽऽ।) यगणौ। ।ऽऽ स्तस्तदा तनुमध्याछन्दः स्यात्। पादान्तेऽत्र विश्रामः ॥ ७ ॥

भा० टी०–गायत्री (६ अक्षरके पादवाली) जातिमें यदि तगण और यगण प्रत्येक चरणमें हो तो वह "तनुमध्या" छन्द कहाता है ॥ ७ ॥

तनुमध्याका उदाहरण।

"बाला मृगनेत्री बिंबाधररम्या। प्राप्या नहि भाग्यैर्हीनैस्तनुमध्या॥"

## शशिवदनाछन्दोलक्षणम् ।

### शशिवदना न्यौ ॥ ८ ॥

छ० टी०–यदि षडक्षरपादजातावेव न्यौ–नगण ।।। यगणौ । ऽऽ. स्तस्तदा शशिवदनाछन्दः स्यात् । इदमेव चण्डरसावृत्तमिति केचित् ॥ ८ ॥

भा० टी–जो ६ अक्षरके पादवाली जातिमें ही प्रत्येक चरणमें नगण (।।।) और यगण (।ऽऽ) हो तो वह "शशिवदना" छन्द कहाता है ॥ ८ ॥

### शशिवदनाका उदाहरण । ( मत्कृतिः )

"भज भवमीशं भवभयनाशम् । कविवर किं ते शशिवदनाभिः ॥"

## वसुमतीछन्दोलक्षणम् ।

### त्सौ चेद्वसुमती ॥ ९ ॥

छ० टी०–यदि षडक्षरपादजातावेव त्सौ–तगण ऽऽ। सगणौ ।।ऽ भवतस्तदा वसुमतीनाम छन्दः स्यात् ॥ ९ ॥

भा०टी०–जो ६ अक्षरके चरणवाली जातिमें ही प्रत्येक चरणमें तगण ऽऽ। और सगण ।।ऽ ये दोनो ही हों तो वह "वसुमती" नामका छन्द जानो ॥९॥

### वसुमतीका उदाहरण ।

"पृथ्वीधृतवता राज्ञा नयवता । उद्यज्जनपदा श्लाघ्या वसुमती ॥"

## विद्युन्मालाछन्दोलक्षणम् ।

### विद्युन्माला मो मः ॥ १० ॥

छ० टी०–यदा षडक्षरपादजातावेव मः मः–मगण (ऽऽऽ। ऽऽऽ) द्वय भवति तदा विद्युन्मालानाम छन्दो भवति ॥ १० ॥

भा० टी०– जो ६ अक्षरके पादवाली जाति (गायत्री) में ही प्रत्येक चरणमें दो मगण (ऽऽऽ ऽऽऽ) हो तो वह "विद्युन्माला"[1] नामका छन्द जानो १०

### विद्युन्मालाका उदाहरण । (मत्कृतिः)

"भाति स्वाङ्कैर्बाला छात्रैर्विद्याशाला । शैले वन्हिज्वला मेघैर्विद्युन्माला॥"

## स्रग्विणीछन्दोलक्षणम् ।

### स्याद्रौ स्रग्विणी ॥ ११ ॥

छ० टी०–यदा षडक्षरपादजातावेव, रौ–रगणौ द्वौ ऽ।ऽ ऽ।ऽ स्तस्तदा स्रग्विणीछन्दस्स्यात् ॥ ११ ॥

भा० टी०–यदि ६ अक्षरके पादवाली जातिमें ही प्रत्येक चरणमें दो रगण हो तो वह "स्रग्विणी छन्द" जानो ॥ ११ ॥

---

१ विद्युन्मालाको कहीं शेषराज छन्द भी माना है ।

## स्रग्विणी छन्दका उदाहरण।

"कैर्मुदा कौमुदी भुज्यते सुन्दरी।सुप्रियासङ्गमा विद्यते येषु तैः॥"

## सोमराजीछन्दोलक्षणम्।

### ययौ सोमराजी॥ १२॥

छ० टी०—यदा षडक्षरपादजातावेव ययौ—द्वौ यगणौ ।ऽऽ ।ऽऽ स्तस्तदा सोमराजीछन्दस्स्यात्॥ १२॥

भा० टी०—जो ६ अक्षरके चरणवाली जातिमें ही प्रत्येक चरणमें दो यगण हो तो वह "सोमराजी" छन्द जानो॥ १२॥

## सोमराजीछन्दका उदाहरण।

"हरे सोमराजीसमा ते यशःश्रीः। जगन्मण्डलस्य छिनत्यन्धकारम्॥"

## सोमकुलछन्दोलक्षणम्।

### स्यान्मसौ सोमकुलम्॥ १३॥

छ० टी०—यदा गायत्र्यामेव मसौ—मगण ऽऽऽ सगणौ ।।ऽ स्तस्तदा सोमकुल छन्दस्स्यात्॥ १३॥

भा० टी०—यदि ६ अक्षरके चरणवाली जातिमें ही प्रत्येक चरणमें मगण (ऽऽऽ) और सगण (।।ऽ) हो तो वह "सोमकुल" छन्द जानो॥ १३॥

## सोमकुल छन्दका उदाहरण। (मत्कृतिः)

"धातु[1]प्रार्थनया यन्नासीद्धि हरिः। कृष्णः कंसहरो धन्यं सोम कुलम्॥"

## कामलतिकाछन्दोलक्षणम्।

### कामलतिका भ्यौ॥ १४॥

छ० टी०—यदा गायत्र्यामेव भ्यौ—भगण ऽ।। ।ऽऽ यगणौ भवतस्तदा कामलतिकाछन्दो भवति॥ १४॥

भा०टी०—जो ६ अक्षरके पादजातिमें ही प्रत्येक चरणमें भगण (ऽ।।) और यगण (।ऽऽ) हो तो वह "कामलतिका" छन्द जानो॥ १४॥

## कामलतिका छन्दका उदाहरण। (मत्कृतिः)

"कामिजनलोला कामदकपोला। कामिजनकाङ्क्षी कामलतिकास्त्री॥"

---

१ शखनारीति केचन।

## मधुमतिच्छन्दोलक्षणम् ।

### ७ उष्णिहि–मधुमति ननगाः ॥ १५ ॥

छ० टी०–उष्णिहि–सप्ताक्षरचरणजातौ । मधुमति–मधुमतिच्छन्दसि । ननगाः–नश्च नश्च गश्च ननगाः । । । । । । ऽ प्रतिचरणे नगणनगणगुरवो भवन्तीत्यर्थः ॥ १५ ॥

भा० टी०–उष्णिक् ( ७ अक्षरके पादवाली जातिमें ) दो नगण ( ।।। ।।। ) गुरु प्रत्येक चरणमें हो तो उसे " मधुमतिछन्द " जानो ॥ १५ ॥

### मधुमतिछन्दका उदाहरण ।

" मधुमति वदने सरसिजदमने । अलिवरसुभगं विलसति नयनम् ॥"

## कुमारललिताछन्दोलक्षणम् ।

### कुमारललिता ज्सौग् ॥ १६ ॥

छ० टी०–यदि सप्ताक्षरपादजातावेव ज्सौ–जगण । ऽ । सगणौ । । ऽ ग् गुरुश्चैकस्तदा कुमारललिताछन्दः स्यात् । केचिदत्र द्वाभ्यां पञ्चभिश्च यतिः कथयन्ति ॥ १६ ॥

भा० टी०–जो ७ अक्षरके चरणवाली जातिके प्रत्येक चरणमें जगण ( । ऽ । ) सगण ( । । ऽ ) और एक गुरु ( दीर्घ वर्ण ) हो तो उसे " कुमारललिता " छन्द जानो ॥ १६ ॥

### कुमारललिताका उदाहरण ।

" पतिर्जगति यस्याधिको न वयसा वै ।
कुमारललिता सा कुलात् पतति नारी ॥ "

## हंसमालाछन्दोलक्षणम् ।

### सरगाः हंसमाला ॥ १७ ॥

छ० टी०–सप्ताक्षरपादजातौ यदा प्रतिपादे सरगाः–सगण ।।ऽ रगण ऽ । ऽ गुरवो भवन्ति । तदा हंसमालाछन्दः स्यात् ॥ १७ ॥

भा० टी०–जो ७ अक्षरके पादवालीजातिके प्रत्येक चरणमें सगण ( । । ऽ ) रगण ( ऽ । ऽ ) और एक गुरु ऽ ( दीर्घवर्ण ) हो तो उसे "हंसमाला" छन्द जानो ॥ १७ ॥

---

१ मधुमती नभागा इति क्वचित्पाठः ।

हंसमालाछन्दका उदाहरण।

"मनुजानां मनो वै जगति स्त्री विशाला।
हरते दर्शनाद्वै गगने हंसमाला॥" (मत्कृतिः)

मदलेखाछन्दोलक्षणम्।

म्सौ गः स्यान्मदलेखा॥ १८॥

छ० टी०—यदा उष्णिहि म्सौ—मगणसगणौ। गः—गुरुश्चैकः। तदा मदलेखा—मदलेखाछन्दः स्यात्॥ १८॥

भा० टी०—जो ७ अक्षरके चरणवालीजातिके प्रत्येक पादमें मगण (ऽऽऽ) सगण (।।ऽ) और एक गुरु हो तो उसे "मदेलखा" छन्द जानो॥१८॥

मदलेखा छन्दका उदाहरण।

"लावण्याम्भसि मग्ने तस्याः काममहेभे।
भ्रष्टेयं स्तनकुंभाद्रोमाली मदलेखा॥"

विद्युन्मालाछन्दोलक्षणम्।

८ अनुष्टुभि—मो मो गो गो विद्युन्माला॥ १९॥

छ० टी०—८ अनुष्टुभि—अष्टाक्षरचरणजातौ। मः मः—मगणद्वयम्। गः गः—गुरुद्वयञ्च स्यात्तदा विद्युन्मालानामच्छन्दस्स्यात् चतुर्भिश्चतुर्भिर्यतिरत्र॥ १९॥

भा० टी०—अनुष्टुप् (८ अक्षरके पादवाली जातिमें) दो मगण (ऽऽऽ२) और दोही गुरु (दीर्घाक्षर) प्रत्येक चरणमें हो तो वह "विद्युन्माला" नामक छन्द जानो॥ १९॥

विद्युन्माला छन्दका उदाहरण।

"देवं रामं चित्ते धृत्वा ज्ञानांभोधौ तिष्ठांजस्ताम्।
ज्ञात्वा लोके भूयो भूयो लक्ष्मी विद्युन्मालां लोलाम्॥"

चित्रपदाछन्दोलक्षणम्।

भौ गिति चित्रपदा गः॥ २०॥

छ टी०—अनुष्टुभि भौ—द्वौ भगणौ। गगः द्वौ गुरू च। भवतस्तदा चित्रपदा—चित्रपदाछन्दः स्यादिति॥ २०॥

भा० टी०—जो ८ अक्षरके चरणवाली जातिमें ही दो भगण और दोही गुरु (दीर्घाक्षर) हो तो वह "चित्रपदा" छन्द जानो ऽ॥ ऽ॥ ऽऽ॥२०॥

### चित्रपदा छन्दका उदाहरण ।

"यस्य मुखे प्रियवाणी चेतसि सज्जनता च ।
चित्रपदापि च लक्ष्मीस्तं पुरुषं न जहाति ॥"

### माणवकछन्दोलक्षणम् ।

### माणवकं भात्तलगाः ॥ २१ ॥

छ० टी०—अष्टाक्षरपादजातावेव यदि भात्—भगणात् ऽ।। तलगाः—तगण ऽऽ। लघु । गुरवः ऽ सन्ति तदा माणवक छन्दो भवति ॥ पिङ्गलसूत्रे तु माणवक्रीडितकमिदमेव भाणितम् । अत्र चतुर्भिश्चतुर्भिर्यतिः ॥ २१॥

भा० टी०—जो ८ अक्षरके चरणवाली जातिमें प्रत्येक चरणमें १ भगण (ऽ।।) १ तगण (ऽऽ।) १ लघु (ह्रस्व वर्ण) और १ गुरु (दीर्घवर्ण) हो तो उसे "माणवक" छन्द जानो ॥ २१ ॥

### माणवक छन्दका उदाहरण ।

"शीतरुजान्योन्यरणद्दन्तरवैर्विस्तरकम् ।
साम पठन् माणवकोऽशास्ति मुहुर्यत्र शुकैः ॥"

### हंसरुतच्छन्दोलक्षणम् ।

### म्नौ गौ हंसरुतमेतत् ॥ २२ ॥

छ० टी०—अनुष्टुभ्येव म्नौ—मगणनगणौ । गौ—द्वौ गुरू च भवतः एतद्धंसरुत छन्दः ॥ २२ ॥

भा० टी०—यहि अनुष्टुप्में ही मगण (ऽऽऽ) नगण (।।।) और दो गुरु हो तो वह " हंसरुत " छन्द कहाता है ॥ २२ ॥

### हंसरुत छन्दका उदाहरण ।

" दृष्ट्वा काशकुसुमानि श्रुत्वा हंसरुतमेतत् ।
कामार्तः शरदि यः स कष्टं भावयति सर्वम् ॥"

### कुमारललिताछन्दोलक्षणम् ।

### कुमारललिता ज्सौ गौ ॥ २३ ॥

छ० टी०—अष्टाक्षरपादजातावेव ज्सौ—जगण ।ऽ।, सगणौ ।।ऽ गौ द्वौ गुरू स्तस्तदा कुमारललिताछन्दः स्यात् ॥ २३ ॥

भा० टी०—यदि आठ अक्षरके पादवाली जातिमें जगण (।ऽ।) सगण (।।ऽ) और दो गुरु (२ दीर्घाक्षर) प्रत्येक चरणमें हो तो वह "कुमारललिता" छन्द जानो ॥ २३ ॥

## कुमारललिता छन्दका उदाहरण।

" कुमारललिता जाया नवा स्थविरनारी या।
कलेश्छलवती छाया कथं न कुलटा सा या॥" (मत्कृतिः)

## समानिकाछन्दोलक्षणम्।

## जौं समानिका गलौ च ॥ २४ ॥

छ० टी०--यत्रानुष्टुब्जातौ जौं--रगण ऽ। ऽ जगणौ । ऽ। गलौ– गुरु-लघू च भवतस्तदा समानिकाछन्दो भवति ॥ २४ ॥

भा० टी०–८ अक्षरके चरणवाली जातिमें यदि प्रत्येक पादमें रगण (ऽ।ऽ) जगण (।ऽ।) १ गुरु और १ लघु हो तो उसे "समानिका" छन्द जानो ॥ २४ ॥

## समानिका छन्दका उदाहरण।

" कामकोपलोभमोह शत्रुभिः सदाऽजितस्य।
योगिनो धराधवेषु नो[1] समानिका कलापि॥" (मत्कृतिः)

## प्रमाणिकाछन्दोलक्षणम्।

## प्रमाणिका जरौ लगौ ॥ २५ ॥

छ० टी०--यदा अष्टाक्षरपादजातावेव जरौ–जगण । ऽ। रगणौ ऽ। ऽ। लगौ–लघुगुरू च स्तस्तदा प्रमाणिकाछन्दो भवति ॥ २५ ॥

भा० टी०–जो अनुष्टुप् (८ अक्षरके चरणवालीजाति) में ही जगण (।ऽ।) रगण (ऽ।ऽ) लघु और गुरु प्रत्येक चरणमें हो तो वह "प्रमाणिका" छन्द जानो ॥ २५ ॥

## प्रमाणिका छन्दका उदाहरण।

" प्रवाति दक्षिणानिलः सुपुष्पिताम्रकिंशुकः।
वसन्त एव सांप्रतं प्रमाणिकात्र कोकिला॥"

## वितानच्छन्दोलक्षणम्।

## वितानमाभ्यां यदन्यत् ॥ २६ ॥

छ० टी०--यस्यामेवानुष्टुभि आभ्याम्–समानिकाप्रमाणिकाभ्याम्। यत्–अन्यल्लक्षण तद्वृत्त वितान नाम स्यात्। वितानात्मके छन्दसि य कचन गण-नियममन्यथा कुर्यादस्यानेकप्रकारत्वात् ॥ २६ ॥

---

१ अत्र नो निषेधार्थे। " अ मा नो ना प्रतिषेधे वक्तव्यं " इति।

भा० टी०–अनुष्टुप् जातिमें ही जो समानिका और प्रमाणिकासे भिन्न लक्षण जिसके हों वह विताननामक छन्द जानो। वितान छन्दमें चाहे सो गण ले सकते हैं क्योंकि इसके अनेक प्रकार हैं ॥ २६ ॥

## वितानछन्दका उदाहरण।

" कङ्कालयमाल्यधारिणं कन्दर्पदर्पदारिणम्।
संसारबंधमोचनं भजामहे त्रिलोचनम् ॥"

## नाराचकछन्दोलक्षणम्।

नाराचकं तरौ लगौ ॥ २७ ॥

छ० टी०–यद्यष्टाक्षरजातावेव तरौ–तगण ऽ ऽ। रगणौ ऽ। ऽ लगौ–लघुगुरू। स्तस्तदा नाराचक वृत्तं स्यात् ॥ २७ ॥

भा० टी०– ८ अक्षरके पादजातिमें तगण (ऽऽ।) रगण (ऽ।ऽ) लघु (ह्रस्व वर्ण) गुरु (दीर्घवर्ण) प्रत्येक चरणमें हो तो वह " नाराचक " नामका छन्द जानो ॥ २७ ॥

## नाराचक छन्दका उदाहरण।

" पापे रता सदा मतिर्नारायणे न वै रतिः।
गाथा श्रुता न भारती पुंसः कथं भवेद्गतिः ॥" ( मत्कृतिः )

## सिंहलेखाछन्दोलक्षणम्।

जौ गगौ च सिंहलेखा ॥ २८ ॥

छ० टी०–यद्यनुष्टुभि जौ–रगण ऽ। ऽ जगणौ। ऽ। गगौ–द्वौ गुरू। स्तस्तदा सिंहलेखाछन्दो भवति ॥ २८ ॥

भा० टी०–जो अनुष्टुप् (८ अक्षरके चरणवाली) जातिमें प्रत्येक चरणमें रगण (ऽ।ऽ) जगण (।ऽ।) और दो गुरु हों तो वह "सिंहलेखा" नामक छन्द जानो ॥ २८ ॥

## सिंहलेखा छन्दका उदाहरण।

" सिंहविक्रमस्य भार्या सिंहविक्रमा स्वयं या।
सिंहविक्रमप्रसूश्चेत् सा भवेच्च सिंहलेखा ॥" ( मत्कृतिः )

## हलमुखीछन्दोलक्षणम्।

९ बृहत्याम्–रान्नसाविह हलमुखी ॥ २९ ॥

छ० टी०–बृहत्याम्–नवाक्षरपादजातौ। रात्–रगणात्। परौ नसौ–नगणसगणौ। स्तस्तदा इह छन्दःशास्त्रे हलमुखीछन्दो भवति। त्रिभिष्षड्भिश्च यतिरित्याम्नायः ॥ २९ ॥

भा० टी०—बृहती (९ अक्षरके चरणवाली जातिमें) रगण (ऽ।ऽ) नगण (।।।), और सगण (।।ऽ) प्रत्येक चरणमें हो तो छन्दशास्त्रमें वह "हलमुखी" छन्द जानो ॥ २९ ॥

## हलमुखीछन्दका उदाहरण ।

" निन्दितां वपुषि पुरुषद्वेषिणी विरलदशनाम् ।
तां सखे परिणयविधौ दूरतस्त्यज हलमुखीम् ॥"

## भुजगशिशुभृताछन्दोलक्षणम् ।

## भुजगशिशुभृता नौ मः ॥ ३० ॥

छ० टी०—यदि नवाक्षरपादजातौ नौ—द्वौ नगणौ स्तः । मः—मगणश्चैकः स्यात्तदा भुजगशिशुभृताछन्दः । पिङ्गलसूत्रे तु भुजगशिशुसुतेयम् । सप्तभिर्द्वाभ्याश्चात्र विश्रामः ॥ ३० ॥

भा० टी०—जो ९ अक्षरके पादवाली जातिमें दो नगण (।।।) और एक मगण (ऽऽऽ) प्रत्येक पादमें हो तो उसे "भुजगशिशुभृताछन्द" जानो॥३०

## भुजगशिशुभृता छन्दका उदाहरण ।

" सुरतरुलवलीवल्ली—किसलयगहनच्छन्नाः ।
भुजगशिशुभृता रम्या मलयगिरिवनोद्देशाः ॥"

## भद्रिकाछन्दोलक्षणम् ।

## भद्रिका भवति रो नरौ ॥ ३१ ॥

छ० टी०—बृहत्यामेव रः—रगणः । नरौ—नगणरगणौ च स्तस्तदा भद्रिकाछन्दो भवति ॥ ३१ ॥

भा० टी०—जो ९ अक्षरके चरणवाली जातिमें रगण (ऽ।ऽ) नगण (।।।) और फिर रगण (ऽ।ऽ) प्रत्येक चरणमें हो तो वह " भद्रिका " छन्द जानो ॥ ३१ ॥

## भद्रिका छन्दका उदाहरण ।

" भद्रिका हरिणलोचना कामिनी सकलसुन्दरी ।
पुण्यतो भवति नान्यथा गेहिनी मदनवल्लरी ॥ "

## शुद्धविराट्छन्दोलक्षणम् ।

## १० पङ्क्तौ—म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ ३२ ॥

छ० टी०— पङ्क्तौ—दशाक्षरपादजातौ । म्सौ—मगणसगणौ । ज्गौ—

जगणगुरू च स्तः । इदं शुद्धविराट् नाम वृत्त मतम्—अभिप्रेतमित्यर्थः । पादान्तेऽत्र यतिः ॥ ३२ ॥

भा० टी०—पंक्ति (१० अक्षरके चरणवाली जाति) में मगण (ऽऽऽ), सगण (।।ऽ), जगण (।ऽ।) और १ गुरु (दीर्घाक्षर) प्रत्येक चरणमें हो तो वह "शुद्धविराट्" छन्द माना गया है ॥ ३२ ॥

### शुद्धविराट् छन्दका उदाहरण ।

" विश्वं तिष्ठति कुक्षिकोटरे वक्रे यस्य सरस्वती सदा ।
अस्मद्वृद्धपितामहो गुरुर्ब्रह्मा शुद्धविराट् पुनातु नः ॥"

### पणवनामछन्दोलक्षणम् ।

**म्नौ य्गौ चेति पणवनामेदम् ॥ ३३ ॥**

छ० टी०—पक्तावेव म्नौ—मगणनगणौ । य्गौ—यगणगुरू च । भवतस्तदा इद—वृत्तम् पणवनाम इति । अत्र पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ॥ ३३ ॥

भा० टी०—१० अक्षरके पादवाली जातिमें मगण (ऽऽऽ) नगण (।।।) यगण (।ऽऽ) और १ गुरु हो तो उसे "पणव" नामक छन्द जानो ॥३३॥

### पवण छन्दका उदाहरण ।

" यासां वक्षसि घनवक्षोजे हारः संप्रति शुशुभे नारः ।
पादौ नूपुररवसंलोलौ भ्रातस्ताः पणवनिताः पश्य ॥"

### चम्पकमालाछन्दोलक्षणम् ।

**चम्पकमाला चेद्भमसाद्गुः ॥ ३४ ॥**

छ० टी०—पक्तावेव भमसात्—भगणमगणसगणेभ्यः । परो गुः गुरुर्दीर्घवर्णश्चेत् तदा चम्पकमालाछन्दो भवति । पिङ्गलसूत्रे त्वियमेव रुक्मवती । अत्रापि पादान्ते पञ्चभिर्वा यतिरिति वृद्धाः ॥ ३४ ॥

भा० टी०—१०अक्षरके चरणवाली जातिमें भगण (ऽ।।) मगण (ऽऽऽ) सगण (।।ऽ) और १ गुरु वर्ण प्रत्येक चरणमें हो तो उसे "चंपकमाला" छन्द जानो। इसीको रुक्मवती और मणिबंध भी कहते हैं ॥ ३४ ॥

### चंपकमाला छदन्का उदाहरण ।

" वक्षसि यस्याश्चम्पकमाला चंपकपुष्पालंकृतवाला[1] ।
चंपकवर्णाऽतीव विशाला रुक्मवतीयं किं तव बाला ॥" ( मत्कृति. )

---

१ वाला. केशा. यस्या. सेतिविग्रहः ।

## मयूरसारिणीछन्दोलक्षणम्।

### जौ रगौ मयूरसारिणी स्यात्॥ ३५॥

छ० टी०—पङ्क्तावेव जौ—रगणजगणौ। रगौ—रगणगुरू च। यदा भवतस्तदा मयूरसारिणीछन्दस्स्यात्। अत्र पादान्ते यतिः॥ ३५॥

भा० टी०-१०अक्षरके पादवाली जातिमें जो रगण (ऽ।ऽ) जगण (।ऽ।) रगण (ऽ।ऽ) और १ गुरु प्रत्येक पादमें हो तो वह " मयूर सारिणी " छन्द हो॥ ३५॥

### मयूरसारिणीका उदाहरण।

" विस्तरेण बर्हभाररम्या बर्हिणो मयूरसारिणीयम्।
गर्जितं निशम्य वारिदानां नृत्यति प्रमोदनिर्भराङ्गी॥"

## दीपकमालाछन्दोलक्षणम्।

### दीपकमाला चेद्भमौ जगौ॥ ३६॥

छ० टी०—दशाक्षरपादजातावेव भमौ—भगणमगणौ। जगौ—जगणगुरू च। भवतश्चेत्तदा दीपकमालाछन्दो भवति॥ ३६॥

भा० टी०-दश अक्षरके पादवाली जातिमें यदि भगण (ऽ।।) मगण (ऽऽऽ) जगण (।ऽ।) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो वह "दीपकमाला "छन्द हो॥ ३६॥

### दीपकमाला छन्दका उदाहरण।

" कार्तिकमासे भानुजातटे मानवदत्ता निर्मले जले।
भाति निशायाश्चेन्दिरार्चने दीपकमाला श्रीमतां गृहे॥"(मत्कृतिः।)

## हंसीछन्दोलक्षणम्।

### ज्ञेया हंसी मभनगयुता॥ ३७॥

छ० टी०—दशाक्षरपादजातावेव मश्च भश्च नश्च गश्च ते मभनगाः मभनगैर्युता मभनगयुता मगणभगणनगणगुरुभिस्संयुता। हंसी ज्ञेया॥ ३७॥

भा० टी०-१० अक्षरके चरणवाली जातिमें ही जो मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) और १ गुरु युक्त हो सो "हंसी छन्द" जानो॥ ३७॥

### हंसी छन्दका उदाहरण।

" मंदाक्रांतांत्ययतिरहिता सालंकारे भवति यदि सा।
तद्विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने॥ "

## मत्ताछन्दोलक्षणम् ।

### ज्ञेया मत्ता मभसगयुक्ता ॥ ३८ ॥

छ० टी●—पंक्तावेव मभसगयुक्ता—मगणभगणसगणगुरुभिर्युक्ता । मत्ता ज्ञेया। चतुर्भिः षड्भिर्यतिरत्र ॥ ३८ ॥

भा० टी०–१० अक्षरके चरणवाली जातिमें ही जो मगण (ऽऽऽ) भगण (ऽ।।) सगण (।।ऽ) और १ गुरुयुक्त हो सो "मत्ता" छन्द जानो॥३८॥

### मत्ताका उदाहरण ।

" आम्रश्रेष्ठाः स्मरशरबन्धो बद्धावासाः पिकसहचर्याः ॥
गायन्त्यस्ताः कलमतिमत्तास्तन्मध्येऽहं सखि मधुरेषः ॥ "

## मनोरमाछन्दोलक्षणम् ।

### नरजगैर्भवेन्मनोरमा ॥ ३९ ॥

छ० टी०—दशाक्षरपादजातावेव नरजगैः—नगणरगणजगणगुरुभिः । मनोरमाछन्दो भवेत् ॥ ३९ ॥

भा० टी०–१० अक्षरके पादवाली ( पंक्ति ) जातिमें ही नगण (।।।) रगण (ऽ।ऽ) जगण (।ऽ।) और १ गुरु युक्त प्रत्येक चरण हो तो वह " मनोरमा " छन्द हो ॥ ३९ ॥

### मनोरमा छन्दका उदाहरण ।

" युवतिरिन्दुसुन्दरा रमा पृथुघनस्तनी कृशोदरी।
गुरुनितंबभारमन्थरा हरति मनो मे मनोरमा ॥ "

## उपस्थिताछन्दोलक्षणम् ।

### त्जौ जो गुरुणेयमुपस्थिता ॥ ४० ॥

छ०– टी०—पक्तावेव त्जौ—तगणजगणौ । जः—जगणः । गुरुणा—गुरुणैकेन । इयं उपस्थिता स्यात् । द्वाभ्यामष्टभिर्यतिः ॥ ४० ॥

भा० टी०–१० अक्षरके चरणवाली जातिमें ही जिसके प्रत्येक चरणमें एक तगण (ऽऽ।) दो जगण (।ऽ।) और १ गुरु ( दीर्घवर्ण ) हो तो वह " उपस्थिता " छन्द हो ॥ ४० ॥

### उपस्थिता छन्दका उदाहरण ।

" एषा जगदेकमनोहरा कन्या कनकोज्ज्वलदीधितिः ।
लक्ष्मीरिव दानवसूदनं पुण्यैर्नरनाथमुपस्थिता ॥"

## इन्द्रवज्राछन्दोलक्षणम् ।

### ११ त्रिष्टुभि—स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ ४१ ॥

छ० टी०—त्रिष्टुभि—एकादशाक्षरपादजातौ । यदि—यदा । तौ—तगणौ । जगौ—जगणगुरू । गः—गुरुश्च । स्यात्तदा इन्द्रवज्रा नाम छन्दस्स्यात् । पादान्तेऽत्र यतिः ॥ ४१ ॥

भा० टी०—यदि ११ अक्षरके चरणवाली जातिमें दो तगण (ऽऽ। २) एक जगण (।ऽ।) और २ गुरु (दीर्घाक्षर) प्रत्येक चरणमें हो तो "इन्द्रवज्रा" छन्द हो ॥ ४१ ॥

## इन्द्रवज्रा छन्दका उदाहरण ।

"ये दुष्टदैत्या इह भूमिलोके द्वेषं व्यधुर्गोद्विजदेवसङ्घे ।
तानिन्द्रवज्रादपि दारुणाङ्गान्नावीवधद्यः सततं नमस्ते ॥"

## उपेन्द्रवज्रालक्षणम् ।

**उपेन्द्रवज्रा जतजास्ततो गौ ॥ ४२ ॥**

छ० टी०—एकादशाक्षरपादजातावेव—जतजाः—जगणतगणजगणाः । ततः पुरतः गौ—द्वौ गुरू । स्तस्तदा उपेन्द्रवज्राछन्दस्स्यात् । पादान्तेऽत्रापि यतिः॥ ४२॥

भा० टी०—जो ११ अक्षरके पादवाली जातिमें ही जगण (।ऽ।) तगण (ऽऽ।) जगण (।ऽ।) और २ गुरु (दीर्घवर्ण) प्रत्येक पादमें हो तो वह "उपेन्द्रवज्रा" छन्द हो ॥ ४२ ॥

## उपेन्द्रवज्रा छन्दका उदाहरण ।

"उपेन्द्रवज्रादिमहाभिघातः प्रयाति नाशं स्मरतो नरस्य ।
अहर्निशं त्वां विजिता मुरारे मुकुन्द विष्णो कुरु मे प्रसादम्॥"

## उपजातिच्छन्दोलक्षणम् ।

**अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।
इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम॥४३॥**

छ० टी०—अत्रानन्तरोदीरितानेन पूर्वोक्तवृत्तयोरिन्द्रवज्रोपेन्द्रवज्रयोर्ग्रहणमवधेयम् तच्च व्याख्याने स्पष्टमेव । न अतरम् अनन्तरम् अनंतरेण व्यवधानराहित्येन उदीरिते वर्णिते अनन्तरोदीरिते पूर्वोक्तेन्द्रवज्रोपेन्द्रवज्रे तयोर्लक्ष्म लक्षणम् तद्भजतस्तौ अनन्तरोदीरितलक्ष्मभाजौ । यस्या इमौ—यदीयौ पादौ दलद्वयेपि चरणौ । स्तास्तास्स्युरुपजातयः किल—इति वृद्धाम्नाये । इत्थम्—अनेनैव प्रकारेणेन्द्रवज्रोपेन्द्रवज्रावत् । अन्यासु वक्ष्यमाणास्वपि जातिषु—जगत्यादिषु । मिश्रितासु—मिलितासु । इदम् एव नाम—उपजाति नाम। स्मरन्ति प्राञ्चः । कुमारसम्भवादिकाव्येषु बहून्युपजात्युदाहरणानि सन्ति ॥ ४३ ॥

भा० टी०-इन्द्रवज्रा और उपेन्द्रवज्रा इन दोनोंके लक्षण युक्त जिसके चरण हों वह उपजाति छन्द कहाता है। इसीप्रकार और भी समान जातिमें भिन्न भिन्न लक्षणवाले वृत्तोंके पाद मिलजानेपर जगतीजातिमें वंशस्थ और इन्द्रवंशा, त्रिष्टुप्जातिमें शालिनी और वातोर्मी अथवा शालिनी और इन्द्रवंशा आदिके परस्पर पादोंके मिलजानेपर भी प्राचीन आचार्योंने उसे " उपजाति " नामक छन्द ही माना है ॥ ४३ ॥

त्रिष्टुप्जातिमें-इन्द्रवज्रा और उपेन्द्रवज्राके योगवाले उपजातिका उदाहरण।

" विहाय पंकेरुहकाननानि स्फारत्स्फुरत्केतकमप्यपास्य ।
मेघागमेऽस्मिन्नुपजातिसर्वे भ्रमन्त्यमी षट्चरणा रणन्ते ॥ १ ॥

त्रिष्टुप्जातिमें-शालिनी और वातोर्म्मीके योगवाले उपजातिका उदाहरण ।

सा स्त्री श्यामा स्निग्धमुग्धायताक्षी पीनश्रोणी दक्षिणावर्तनाभिः ।
मध्ये क्षामा घनपीनस्तनी या श्लाघ्या भर्तुः शालिनी कामिनी स्यात्॥२

शालिनी और इन्द्रवज्राके योगवाले उपजातिका उदाहरण ।

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेहं शाधि मां त्वां प्रपन्नम्॥३॥

जगतीमें-वंशस्थ और इन्द्रवंशाके योगवाले उपजातिका उदाहरण ।

गङ्गातरङ्गार्कसुतापयःसदृङ्मूलाग्रभागा हरिणाक्षि तावकान् ।
कटाक्षपातानुपजातिसंस्थिता द्विरेफमालाऽनुकरोति चंचला ॥ ४ ॥"

सुमुखीछन्दोलक्षणम् ।

ननजलगैर्गदिता सुमुखी ॥ ४४ ॥

छ० टी०-एकादशाक्षरपादजातौ नजजलगैः-नगण-जगण-जगण-लघु-गुरुभिः । सुमुखी गदिता-कथिता । सप्तभिश्चतुर्भिर्यतिरत्र ॥ ४४ ॥

भा० टी०-११अक्षरके पादवाली जातिमें नगण ( ।।। ) जगण ( ।ऽ। ) जगण ( ।ऽ। ) लघु ( ह्रस्व ) और १ गुरु ( ऽ दीर्घवर्ण ) प्रत्येक पादमें हो तो वह " सुमुखी " छन्द कहागया है ॥ ४४ ॥

सुमुखी छन्दका उदाहरण ।

" कनकरुचिर्घनपीनकुचा मनसिजविभ्रमकेलिगृहम् ।
चलनयना नवकुंददती न हरति कस्य मनः सुमुखी ॥ "

## दोधकछन्दोलक्षणम् ।

### दोधकवृत्तमिदं भभभाद्गौ ॥ ४५ ॥

छ० टी०—त्रिष्टुभ्यैव भभभात्—भगणत्रयात् । परौ गौ—द्वौ गुरू । स्तस्तदा इदं दोधकवृत्त—दोधकनामछन्दः । पादान्तेऽत्र यतिः ॥ ४५ ॥

भा० टी०—जो ११ अक्षरके पादवाली जातिमें ३ भगण और २ गुरु प्रत्येक पादमें हो तो यह "दोधक" नामका छन्द कहाजाता है ॥ ४५ ॥

### दोधक छन्दका उदाहरण ।

"दोधकमर्थविरोधकमुग्रं स्त्रीचपलं युधि कातरचित्तम् ।
स्वार्थपरं मतिहीनममात्यं मुञ्चति यो नृपतिः स सुखी स्यात् ॥"

## शालिनीछन्दोलक्षणम् ।

### शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ४६ ॥

छ० टी०—एकादशाक्षरपादजातावेव यदि म्तौ—मगणतगणौ । तगौ—तगणगुरू । गः—गुरुश्च । भवति सा शालिनी उक्ता—कथिता । अब्धिलोकैः—चतुर्भिः सप्तभिश्चात्र यतिः । ॥ ४६ ॥

भा० टी०—११ अक्षरके पादवाली जातिमें १ मगण (ऽऽऽ) दो तगण (ऽऽ।) और २ गुरु (ऽ दीर्घवर्ण) प्रत्येक पादमें हो तो वह "शालिनी" नामका छंद कहाजाता है । शालिनी छन्दमें ४ और ७ अक्षरोंपर विश्राम होता है ॥ ४६ ॥

### शालिनी छन्दका उदाहरण ।

"ग्रामे वासो नायको निर्विवेकी कौटिल्यानामेकपात्रं कलत्रम् ।
नित्यं रोगः पारवश्यं नराणामेतत्सर्वं जीवितामेव मृत्युः ॥"

## वातोर्मीछन्दोलक्षणम् ।

### वातोर्मीयं गदिता म्भौ तगौ गः ॥ ४७ ॥

छ० टी०—त्रिष्टुभि म्भौ—मगणभगणौ । तगौ—तगणगुरू । गः—गुरुश्च । भवति तदा इद वातोर्मी गदिता । यतिस्त्वत्रापि शालिनीवदेव ॥ ४७ ॥

भा० टी०—११ अक्षरके पादवाली जातिमें मगण (ऽऽऽ) भगण (ऽ।।) तगण (ऽऽ।) और २ गुरु प्रत्येक चरणमें हो तो वह "वातोर्मी" छन्द कहा गया है । यति (विश्राम) शालिनीके समान ही जानो ॥ ४७ ॥

### वातोर्मी छन्दका उदाहरण ।

"यात्युत्प्रेक्षं सपदि प्राप्य किञ्चित् स्याद्वा यस्याश्चपला चित्तवृत्तिः ।

या दीर्घाङ्गी स्फुटशब्दाट्टहासा व्रातोर्मी सा वनिता चाशु हेया ॥"

श्रीछन्दोलक्षणम् ।

पञ्चरसैः श्रीर्भतनगगैः स्यात् ॥ ४८ ॥

छ० टी०—एकादशाक्षरपादजातौ भतनगगैः—भगणतगणनगणद्विगुरुभिः । श्रीः—श्रीछन्दः स्यात् । पञ्चरसैः—पञ्चभिः षड्भिश्च यतिः । इयमेव मौक्तिकमाला चोभयोर्लक्षणाभिन्नत्वाच्चानुकूलाप्येके ॥ ४८ ॥

भा० टी०—११ अक्षरके चरणवाली जातिमें भगण (ऽ।।) नगण (।।।) और दोगुरु यदि प्रत्येक चरणमें हो तो वह "श्रीछन्द" हो । इसीका नाम मौक्तिकमाला और कही अनुकूला भी है ॥ ४८ ॥

अनुकूला या मौक्तिकमाला अथवा श्रीछन्दका उदाहरण ।

" वल्लववेषा मुररिपुमूर्तिर्गोपमृगाक्षीकृतरतिपूर्तिः ।
स्यादनुकूला जगति न कस्य वांछितसिद्धौ प्रणतिपरस्य ॥ "

सान्द्रपदछन्दोलक्षणम् ।

सान्द्रपदं भ्तौ नगलघुभिश्च ॥ ४९ ॥

छ० टी०—एकादशाक्षरपादजातौ भ्तौ—भगणतगणौ । च—पुनः । नगलघुभिः—नगणगुरुलघुभिः । सान्द्रपद नाम छन्दस्स्यात् । पञ्चरसैरत्रापि यतिः ॥ ४९ ॥

भा० टी०—११ अक्षरके पादवाली जातिमें भगण (ऽ।।) तगण (ऽऽ।) नगण (।।।) गुरु (ऽ) और अंतमें १ लघु (। ह्रस्वाक्षर) प्रत्येक पादमें हो तो वह "सांद्रपद" छन्द हो । इसमें ५ और ६ अक्षरोंपर यति (विश्राम) होता है । मौक्तिकमालाके अन्तमें गुरु और इसमें लघुका होनाही भिन्न लक्षण पाया जाता है ॥ ४९ ॥

भ्रमरविलसिताछन्दोलक्षणम् ।

म्भौ न्लौ गः स्याद्भ्रमरविलसिता ॥ ५० ॥

छ० टी०—त्रिष्टुभि यदि म्भौ—मगणभगणौ । न्लौ—नगणलघू । गः—गुरुश्च । तदा भ्रमरविलसिता स्यात् । पिङ्गलसूत्रे तु भ्रमरललितमिदम् । अत्र चतुर्भिः सप्तभिर्यतिः ॥ ५० ॥

भा० टी०—११ अक्षरके चरणवाली जातिमें ही जो मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) लघु (ह्रस्व) और गुरु (दीर्घाक्षर) प्रत्येक चरणमें हो तो वह " भ्रमरविलसिता " छन्द हो । इसमें भी ४ और ७ अक्षरोंपर विश्राम होता है ॥ ५० ॥

भ्रमरविलसिताका उदाहरण।

" कान्ते वक्त्रं चलदलचकितं किंवा पद्मभ्रमरविलसितम्।
इत्येवं मे जनयति मनसि भ्रान्तिः कान्ते परिसर सरसि॥ "

रथोद्धताछन्दोलक्षणम्।

रो नराविह रथोद्धता लगौ॥ ५१॥

छ० टी०—एकादशाक्षरपादजातावेव रः—रगणः। नरौ—नगणरगणौ। लगौ—लघुगुरू च। यदा भवतस्तदा। इह—छन्दश्शास्त्रे। रथोद्धता स्यात्। पादान्ते यतिः॥ ५१॥

भा० टी०–११ अक्षरकी पादवाली जातिमें यदि प्रत्येक पादमें यदि रगण (ऽ। ऽ) नगण (।।।) रगण (ऽ। ऽ) १ लघु और १ गुरु (दीर्घाक्षर) हो तो " रथोद्धता " छन्द हो। इसके पादान्तमें यति होती है॥ ५१॥

रथोद्धता छन्दका उदाहरण।

" या करोति विविधैर्विटैस्समं सङ्गतिः परगृहे रता च या।
म्लानयत्युभयतोऽपि बान्धवान् मार्गधूलिरिव सा रथोद्धता॥"

स्वागताछन्दोलक्षणम्।

स्वागतेति रनभाद्गुरुयुग्मम्॥ ५२॥

छ० टी०—यत्र त्रिष्टुभि रनभात्—रगणनगणभगणात्। पर गुरुयुग्मम्—गुरुद्वय च भवति। सा स्वागता इति—स्वागतावृत्त भवतीत्यर्थः। पादान्तेऽत्र यतिः॥५२॥

भा० टी०–११ अक्षरके पादवाली जातिमें रगण (ऽ। ऽ) नगण (।।।) भगण (ऽ।।) और २ गुरु प्रत्येक पादमें हो तो वह " स्वागता " छन्द हो। इसमें पादान्तमें यति होती है॥ ५२॥

स्वागता छन्दका उदाहरण।

" तार्किका घटपटादि घटेरन् शाब्दिका खफछठादि रटेयुः।
मादृशेन सततं स्मरणीयौ रामचन्द्रचरणौ रमणीयौ॥"

शिखण्डितछन्दोलक्षणम्।

शिखण्डितमिदं ज्सौ त्गौ गुरुश्चेत्॥ ५३॥

छ० टी०—एकादशाक्षरपादजातावेव ज्सौ—जगणसगणौ। त्गौ—तगणगुरू। गः—पुनरपि गुरुश्चेत्। इद शिखण्डितम्—शिखण्डित वृत्त स्यात्॥ ५३॥

भा० टी०–११ अक्षरके पादवाली जातिमें यदि जगण (।ऽ।) सगण (।।ऽ) तगण (ऽऽ।) और २ गुरु प्रत्येक पादमें हो तो वह "शिखंडित" नामका छन्द हो॥ ५३॥

## वृत्ताछन्दोलक्षणम् ।

## ननसगगुरुरचिता वृत्ता ॥ ५४ ॥

छ० टी०–त्रिष्टुभ्येव ननसगगुरुरचिता–नगण नगणसगणगगुरुभिश्च रचिता। वृत्ता भवति । चतुर्भिर्यतिरत्रापि ॥ ५४ ॥

भा० टी०–११ अक्षरके पादवाली जातिमें २ नगण (।।।२) १ सगण, (।।ऽ) और २ गुरु ( दीर्घाक्षर ) जिसके प्रत्येक पादमें हो सो "वृत्ता" छन्द हो। इसको वृन्ताभी कहते हैं ॥ ५४ ॥

### वृत्ता छन्दका उदाहरण ।

" द्विजगुरुपरिभवकारी यो नरपतिरतिधनलुब्धात्मा ।
ध्रुवमपि निपतति पापोऽसौ फलमिव पवनहतं वृत्ता (न्ता ) त्॥"

## भद्रिकाछन्दोलक्षणम् ।

## ननरलगुरुभिश्च भद्रिका ॥ ५५ ॥

छ० टी०–एकादशाक्षरपादजातावेव ननरलगुरुभिः–नगणनगणरगणलघु-गुरुभिश्च । भद्रिका ॥ ५५ ॥

भा० टी०–११ अक्षरके पादवाली जातिमें दो नगण (।।।२) एक रगण (ऽ।ऽ) लघु (ह्रस्व) और १ गुरु ( दीर्घाक्षर ) प्रत्येक पादमें होनेसे "भद्रिका" छन्द होता है ॥ ५५ ॥

### भद्रिका छन्दका उदाहरण ।

" कुरु भगवति कालिके कृपां मयि मतिरहिते जने तव ।
न कथमपि कृपां विना क्षमा सुरनरदनुजादिचेतना ॥"

## श्येनिकाछन्दोलक्षणम् ।

## श्येनिका रजौ रलौ गुरुर्यदा ॥ ५६ ॥

छ० टी०–त्रिष्टुभि जातावेव यदा रजौ–रगणजगणौ । रलौ–रगणलघू गुरुश्च तदा श्येनिकाछन्दः स्यात् । पादान्तेऽत्र यतिः ॥ ५६ ॥

भा० टी०–११ अक्षरके पादवाली जातिमें ही रगण (ऽ।ऽ) जगण (।ऽ।) रगण (ऽ।ऽ) १ लघु ह्रस्ववर्ण और १ गुरु ( दीर्घाक्षर )यदि प्रत्येक पादमें हो तो वह "श्येनिका" छन्द हो ॥ ५६ ॥

### श्येनिका छन्दका उदाहरण ।

" क्रूरदृष्टिरायताग्रनासिका चञ्चला कठोरतीक्ष्णवादिनी ।
युद्धकांक्षिणी सदामिषप्रिया श्येनिकेव सा विगर्हिताङ्गना ॥"

## उपस्थितछन्दोलक्षणम् ।

### उपस्थितमिदं ज्सौ ताद्गकारौ ॥ ५७ ॥

छ० टी०—त्रिष्टुभि—एकादशाक्षरपादजातावेव यदा ज्सौ—जगणसगणौ। तात्—तगणात्। परौ गकारौ—गुरू। च भवतस्तदा इद उपस्थित वृत्त ज्ञेयम्। शिखंडितस्याप्युदाहरणमिदमेवैकलक्षणत्वात् ॥ ५७ ॥

भा० टी०–११ अक्षरके चरणवाली जातिमें जो जगण (।ऽ।) सगण (।।ऽ) तगण (ऽऽ।) और २ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो उसे उपस्थित छन्द जानो ॥ ५७ ॥

### उपस्थित छन्दका उदाहरण।

" उपस्थितं वरं कार्यं हि हित्वाऽनुपस्थितमरं यो याचते वै ।
स याति गतधीर्लोकोपहास्यं यथा सुतरुणीसङ्गे च वृद्धः ॥"(मत्कृति.)

## इन्दिराछन्दोलक्षणम्।

### यदि नरौ रलौ गस्तदेन्दिरा ॥ इति ग्रन्थान्तरे ॥

छ० टी०–त्रिष्टुभ्येव यदि नरौ—नगणरगणौ। रलौ—रगणलघू। गः—गुरुश्च। भवति तदा इन्दिरा—इन्दिरा नाम छन्दः स्यात्। कनकमञ्जरी भामिनी चाप्येके लक्षणमिद ग्रन्थान्तरेऽस्ति। न च वृत्तरत्नाकरे ॥

भा० टी०–त्रिष्टुप् ११ अक्षरके चरणवाली जातिमें ही यदि १ नगण (।।।) २ रगण (ऽ।ऽ) १ लघु (। ह्रस्व) और १ गुरु (ऽ दीर्घाक्षर) हो तो वह "इन्दिरा" नामका छन्द होता है इसीको कई कनकमञ्जरी तथा भामिनी छन्द भी कहते हैं। यह लक्षण वृत्तरत्नाकरादिमें नही है हमने ग्रंथान्तरसे लिया है॥

### इन्दिरा छन्दका उदाहरण।

" जयति तेऽधिकं जन्मना व्रजः श्रयतइन्दिरा शश्वदत्र हि।
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते॥ "

## चन्द्रवर्त्मछन्दोलक्षणम्।

### १२ जगत्याम्—चन्द्रवर्त्मगदितं तु रनभसैः ॥ ५८ ॥

छ० टी०–जगत्या—द्वादशाक्षरपादजातौ। रनभसैः—रगणनगणभगण-सगणैः। चन्द्रवर्त्म छन्दस्तु गदितम्—वर्णितम् ॥ ५८ ॥

भा० टी०–जगति (१२ अक्षरके चरणवाली) जातिमें रगण (ऽ।ऽ)

नगण ( ।।। ) भगण ( ऽ।। ) और सगण ( ।।ऽ ) प्रत्येक चरणमें हों तो वह " चन्द्रवर्त्म " छन्द कहा गया है ॥ ५८ ॥

### चन्द्रवर्त्मछन्दका उदाहरण ।

" चन्द्रवर्त्मपिहितं घनतिमिरैः राजवर्त्म रहितं जनगमनैः ।
इष्टवर्त्म तदलंकुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥"

### वंशस्थछन्दोलक्षणम् ।

**जतौ तु वंशस्थमुदीरितं जरौ ॥ ५९ ॥**

छ० टी०—जगत्यामेव जतौ—जगणतगणौ । तु—पुनः । जरौ—जगणरगणौ । यदास्तस्तदा वंशस्थम्—वंशस्थवृत्तम् । उदीरितम्—कथितम्।यतिरत्र पादान्ते॥५९॥

भा० टी०—१२ अक्षरकी पादवाली जातिके प्रत्येकचरणमें यदि जगण ( ।ऽ। ) तगण ( ऽऽ। ) जगण ( ।ऽ। ) और रगण ( ऽ।ऽ ) हो तो वह " वंशस्थ " छन्द कहा गया है ॥ ५९ ॥

### वंशस्थ छन्दका उदाहरण ।

" विशुद्धवंशस्थमुदारचेष्टितं गुणप्रियं मित्रमुपात्तसज्जनम् ।
विपत्तिमानस्य करावलम्बनं करोति यः प्राणपरिक्रयेण तम् ॥ "

### इन्द्रवंशाछन्दोलक्षणम् ।

**स्यादिन्द्रवंशा ततजैरसंयुतैः ॥ ६० ॥**

छ० टी०—द्वादशाक्षरपादजातावेव रसंयुतैः—रगणसमन्वितैः । ततजैः—तगणतगणजगणैः । इन्द्रवंशा स्यात् । पादान्तेऽत्र यतिः ॥ ६० ॥

भा० टी०—१२ अक्षरकी पादवाली जातिमें प्रत्येक पादमें यदि २ तगण ( ऽऽ। ) १ जगण ( ।ऽ। ) और १ रगण ( ऽ।ऽ ) हो तो वह " इन्द्रवंशा " छन्द हो ॥ ६० ॥

### इन्द्रवंशा छन्दका उदाहरण ।

"कुर्वीत यो देवगुरुद्विजन्मनामुर्वीपतिः पातकमर्थलिप्सया ।
तस्येन्द्रवंशेऽपि गृहीतजन्मनः संजायते श्रीः प्रतिकूलवर्तिनी ॥ "

### तोटकछन्दोलक्षणम् ।

**इह तोटकमम्बुधिसैः प्रथितम् ॥ ६१ ॥**

छ० टी०—जगत्यामेव इह—छन्दश्शास्त्रे । अम्बुधिसैः—चतुर्भिः सगणैः। तोटकं प्रथितम्—विस्तृतम् । पादान्तेऽत्रापि यतिः ॥ ६१ ॥

भा० टी०–१२ अक्षरके पादवाली जातिमें यदि प्रत्येक पादमें ४ सगण हो तो उसे " तोटक " छन्द जानो ॥ ६१ ॥

## तोटक छन्दका उदाहरण ।

" द्विजराजमुखी मृगराजकटी गजराजविराजितमंदगतिः ।
यदि सा दयिता हृदये वसति क्व जपः क्व तपः क्व समाधिरतिः ॥ "

## द्रुतविलम्बितछन्दोलक्षणम् ।

**द्रुतविलम्बितमाह नभौ भरौ ॥ ६२ ॥**

छ० टी०–द्वादशाक्षरपादजातावेव नभौ–नगणभगणौ । भरौ–भगणरगणौ । स्तस्तदा द्रुतविलम्बितम् । आह पिङ्गलाचार्य इति शेषः । पूर्ववदेवात्र पादान्ते यतिः ॥ ६२ ॥

भा० टी०–१२ अक्षरवाली पादजातिके प्रत्येक पादमें १ नगण ( ।।। ) २ भगण ( ऽ।। ) और १ रगण ( ऽ।ऽ ) हो तो वह " द्रुतविलम्बित " छन्द कहाता है ॥ ६२ ॥

## द्रुतविलम्बित छन्दका उदाहरण ।

"द्रुतगतिः पुरुषो धनभाजनं भवति मन्दगतिश्च सुखोचितः ।
द्रुतविलंबितखेलगतिर्नृपः सकलराजसुखं श्रियमश्नुते ॥ "

## नवमालिनीछन्दोलक्षणम् ।

**इह नवमालिनी नजपरौ भ्यौ ॥ ६३ ॥**

छ० टी०–जगत्यामेव नजपरौ–नगणजगणाभ्यां परौ । भ्यौ–भगणयगणौ । स्तस्तदा इह–अस्मिन् वृत्तशास्त्रे । नवमालिनी ज्ञेया । यतिरत्राष्टभिश्चतुर्भिः॥६३॥

भा० टी०–१२ अक्षरके पादवाली जातिमें जो नगण ( ।।। ) जगण (।ऽ। भगण ( ऽ।। ) और यगण ( ।ऽऽ ) प्रत्येक पादमें हो तो उसे " नवमालिनी " छन्द जानो इसे कोई नवमालती भी कहते हैं ॥ ६३ ॥

## नवमालिनी छन्दका उदाहरण ।

" धवलपयोंशुकेन परिवीता सकलजनानुरागघृणाक्ता ।
दृढगुणबद्धकीर्तिकुसुमौघैस्तव नवमालिनीव नृपलक्ष्मीः ॥ "

## मौक्तिकदामछन्दो लक्षणम् ।

**चतुर्जगणं वद मौक्तिकदाम ॥ ६४ ॥**

छ० टी०–द्वादशाक्षरपादजातावेव चतुर्जगणक–चतुर्जगणात्मकम् । मौक्तिकदामछन्दो वद–कथय ॥ ६४ ॥

भा० टी०-१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक चरणमें ४ जगण हों उसे "मौक्तिकदाम" छन्द कहो ॥ ६४ ॥

### मौक्तिकदाम छन्दका उदाहरण ।

"सुवर्णघटाभपयोधरयोश्च नितम्बिनि योजय मौक्तिकदाम ।
विलासरसप्रियनायकमाशु विनोदय मानमुपाहर सुभ्रु ॥"

### पुटछन्दोलक्षणम् ।

**वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ॥ ६५ ॥**

छ० टी०-जगत्यामेव यस्य प्रतिपादे नौ-नगणौ । म्यौ-मगणयगणौ । स्तस्तदा अय पुटः-पुटछन्दो भवति । किं विशिष्टः पुटः । वसुयुगविरतिः-वसुयुगाभ्यां विरतिर्विश्रामो यस्य । अष्टभिश्चतुर्भिर्यतिरित्यर्थः। पिङ्गलसूत्रे श्रीपुटोऽयम् ६५

भा० टी०-१२ अक्षरके पादवाली जातिमेंही जिसके प्रत्येक पादमें दो नगण (।।।) १ मगण (ऽऽऽ) और १ यमण (।ऽऽ) हों वो वह "पुट-नामका" छन्द होता है । इसको पिङ्गलाचार्यजीने श्रीपुट नाम लिखाहै ॥६५॥

### पुट छन्दका उदाहरण ।

"बसुनि शिथिलमुष्टिः पार्थिवो यस्त्वमृतपुट इवासौ पुण्यकर्म्मा ।
भवति जगति सेव्यः सर्वलोकैः कविजनकृतकीर्तिः श्लाघ्यश्लोकैः॥"

### प्रमुदितवदनाछन्दोलक्षणम् ।

**प्रमुदितवदना भवेन्नौ रौ ॥ ६६ ॥**

छ० टी०-जगत्यामेव नौ-द्वौ नगणौ । रौ-द्वौ रगणौ च भवतस्तदा प्रमुदितवदना भवेत् । प्रभाप्यस्यैवाख्या नतु भिन्नोभयोरेकलक्षणत्वात् । सप्तमाक्षरैः पञ्चाक्षरैरत्र यतिः पिङ्गलाचार्यैरियमेवोक्ता चञ्चलाक्षिका ॥ ६६ ॥

भा० टी०-१२ अक्षरके पादवाली जातिमें ही दो नगण (।।।) और दोही रगण प्रत्येक पादमें हों तो वह "प्रमुदितवदना" छन्द कहाता है । इसीका दूसरा नाम प्रभा छन्द भी है इन दोनोंका लक्षण एकही होनेसे "प्रमुदित वदना,, से प्रभाभिन्न मत मानो । ७ और ५ अक्षरोंपर विश्राम है यही चञ्चलाक्षिका है मंदाकिनी भी यही है ॥ ६६ ॥

### प्रमुदितवदना छन्दका उदाहरण ।

"बुधवरसदना सभामानदा विधुकररदनामाला ज्ञानदा ।
प्रमुदितवदना परा पारदा प्रविशतु हृदि मे सदा शारदा॥"(मत्कृतिः)

## कुसुमविचित्राछन्दोलक्षणम् ।

**नयसहितौ न्यौ कुसुमविचित्रा ॥ ६७ ॥**

छ० टी०—द्वादशाक्षरपादजातावेव नयसहितौ—नयाभ्या सहितौ । न्यौ—नगणयगणौ । स्तस्तदा कुसुमविचित्रा ज्ञेया । षड्भिरत्र यतिः ॥ ६७ ॥

भा० टी०-१२ अक्षरके पादवाली जातिमें यदि नगण ( । । । ) यगण ( । ऽ ऽ ) और फिर भी नगण ( । । । ) यगण ( । ऽ ऽ ) प्रत्येक पादमें हो तो "कुसुमविचित्रा" छन्द हो । इसमें ६ अक्षरोंपर विश्राम होता है ॥ ६७ ॥

## कुसुमविचित्रा छन्दका उदाहरण ।

" विगलितहारा सुकुसुममाला सचरणलाक्षावलयसुलाक्षा ।
विरचितवेशं सुरतविशेषं कथयति शय्या कुसुमविचित्रा ॥"

## जलोद्धतगतिच्छन्दोलक्षणम् ।

**रसैर्जसजसा जलोद्धतगतिः ॥ ६८ ॥**

छ० टी०—जगत्यामेव यस्य पादे जसजसाः—जगणसगणजगणसगणाः । भवन्ति सा जलोद्धतगतिर्भवति । रसैः षड्भिर्यतिः ॥ ६८ ॥

भा० टी०-१२ अक्षरके चरणवाली जातिमें ही जिसके प्रत्येक पादमें जगण ( । ऽ । ) सगण ( । । ऽ ) फिर जगण ( । ऽ । ) सगण ( । । ऽ ) हो तो वह " जलोद्धतगति " छन्द हो । ६ अक्षरोंपर यति ( विश्राम ) हो ॥ ६८ ॥

## जलोद्धतगति छन्दका उदाहरण ।

" भणक्ति समरे बहूनपि रिपून् हरिः प्रभुरसौ भुजार्जितबलः ।
जलोद्धतगतिर्यथैव मकरस्तरङ्गनिकरं करेण परितः ॥"

## ततिच्छन्दोलक्षणम् ।

**भवति तति नजजै रसंयुतैः ॥ ६९ ॥**

छ० टी०—जगत्यामेव नजजैः—नगणजगणजगणैः । रसयुतैः—रगणसहितैः । ततिच्छन्दो भवति । षड्भिरत्र यतिः ॥ ६९ ॥

भा० टी०-१२ अक्षरके पादवाली जातिमें १ नगण ( । । । ) २ जगण ( । ऽ ) और १ रगण ( ऽ । ऽ ) हो तो " तति " नामक छन्द जानो ॥ ६९ ॥

## तति छन्दका उदाहरण ।

" निगमपथि गमने यदा मतिर्हरिहरचरणयोर्यदा रतिः ।
भवति हि जगति नुस्तदा ततिर्जनधनगृहसुते यदाऽरतिः॥"(मत्कृति.)

## भुजङ्गप्रयातच्छन्दोलक्षणम् ।

### भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ७० ॥

छ० टी०–जगत्यामेव चतुर्भिः यैः–यगणैः । भुजङ्गप्रयात भवेदत्र पादान्ते यतिः ॥ ७० ॥

भा० टी०–१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक पादमें चार यगण (।ऽऽ) हों वह "भुजङ्गप्रयात" छन्द हो। इसमें पादान्तमें यति होती है ॥ ७० ॥

### भुजङ्गप्रयात छन्दका उदाहरण ।

"पुरः साधु भद्रातिमिथ्याविनीतः परोक्षे करोत्यर्थनाशं हताशः ।
भुजङ्गप्रयातोपमं यस्य चित्तं त्यजेत्तादृशं दुश्चरित्रं कुमित्रम् ॥"

## स्रग्विणीछन्दोलक्षणम् ।

### रैश्चतुर्भिर्युता स्रग्विणी संमता ॥ ७१ ॥

छ० टी०–द्वादशाक्षरजातावेव चतुर्भिः रैः–रगणैः । युता–संयुता । स्रग्विणी संमता–अभिमतेत्यर्थः । पादान्तेऽत्रापि यतिः ॥ ७१ ॥

भा० टी०–१२ अक्षरके पादवाली जातिमें ४ रगण जिसको प्रत्येक पादमें हो उसे "स्रग्विणी" छन्द जानो। इसके पादान्तमें यति (विराम) होता है ॥ ७१ ॥

### स्रग्विणी छन्दका उदाहरण ।

"यो रणे युध्यते निर्भरं निर्भयस्त्याजितो यस्य सर्वश्च दानावधिः ।
तं नरं वीक्ष्य लक्ष्मीर्यशः स्रग्विणी नूनमभ्येति सत्कीर्तिशुक्लांशुका॥"

## प्रियंवदाच्छन्दोलक्षणम् ।

### भुवि भवेन्नभजरैः प्रियंवदा ॥ ७२ ॥

छ० टी०–द्वादशाक्षरपादजातावेव नभजरैः–नगणभगणजगणरगणैः । प्रियंवदा भुवि–भूम्यां । भवेत् ॥ ७२ ॥

भा० टी०–१२ अक्षरके पादवाली जातिमें नगण (।।।) भगण (ऽ।।) जगण (।ऽ।) और रगण (ऽ।ऽ) जिसके प्रत्येक पादमें हों वह "प्रियंवदा" छन्द हो ॥ ७२ ॥

### प्रियंवदा छन्दका उदाहरण ।

"शिवशिवेति हृदि यः स्मरेन्मुदा वसति तस्य कमला गृहे सदा ।
वदति वाग्घरिगुणांश्च सर्वदा भवति साऽभ्युदयदा प्रियंवदा ॥"

## मोचचामरच्छदोलक्षणम् ।

### जरौ जरौ वदस्व मोचचामरम् ॥ ७३ ॥

छ० टी०—जगत्यामेव जरौ—जगणरगणौ । जरौ—पुनरपि जगणरगणौ । भवतस्तदा मोचचामर वदस्व । इदमेव विभावरीवृत्तमपि ॥ ७३ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें जगण (।ऽ।) रगण (ऽ।ऽ) और फिर भी जगण (।ऽ।) रगण (ऽ।ऽ) जिसके प्रत्येक पादमें हो उसे "मोचचामर" छन्द कहो। इसीको विभावरी छन्द भी कहते हैं ॥ ७३ ॥

## मोचचामर वा विभावरी छन्दका उदाहरण ।

" अवाप्य मानुषं सुजन्म यो नरः करोति धर्मसंग्रहं सुधीवरः ।
सदाऽवतीह तं विपत्स्वयं वृषः स मानवेषु धार्मिको यशोधरः ॥"

## मणिमालाछन्दोलक्षणम् ।

### त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ ७४ ॥

छ० टी०—द्वादशाक्षरपादजातावेव त्यौ त्यौ—तगणयगणौ द्विरावृत्तौ । स्तः सा मणिमाला भवति । किंविशिष्टा ? गुहवक्त्रैः—षड्भिः । छिन्ना—कृतयतिरित्यर्थः । इयमेव पुष्पविचित्रा ॥ ७४ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें यदि दोबार तगण (ऽऽ।) यगण (।ऽऽ) प्रत्येक चरणमें हों तो वह "मणिमाला" छंद हो। इसीको पुष्पविचित्रा भी कहते हैं। इसमें छः छः अक्षरपर यति होती है ॥ ७४ ॥

## मणिमाला छन्दका उदाहरण ।

" प्रह्वाऽमरमौलौ रत्नोपलक्लृप्ते जाता प्रतिबिम्बा शोणा मणिमाला ।
गोविन्दपदाब्जे राजीनखराणामास्तां मम चित्ते ध्वान्तं शमयन्ति ॥ "

## ललिताछन्दोलक्षणम् ।

### धीरैरभाणि ललिता तभौ जरौ ॥ ७५ ॥

छ० टी०—जगत्यामेव तभौ—तगणभगणौ । जरौ—जगणरगणौ । यदि भवतस्तदा धीरैः—सुधीभिः । ललिता अभाणि ॥ ७५ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक पादमें तगण (ऽऽ।) भगण (ऽ।।) जगण (।ऽ।) और रगण (ऽऽ।) हो वह पंडितोकरके "ललिता" छन्द कहा गया है ॥ ७५ ॥

## ललिता छन्दका उदाहरण ।

"यस्यावला सुललितास्ति धीमती चन्द्रानना हरिणलोचना सती ।

वश्यात्मजा वदनगा सरस्वती धन्यः पुमाँस्स नृषु भारते स्थितिः (मत्कृति)

## प्रमिताक्षराछन्दोलक्षणम् ।

**प्रमिताक्षरा सजससैरुदिता ॥ ७६ ॥**

छ० टी०—जगत्यामेव सजससैः—सगणजगणसगणसगणैः । प्रमिताक्षरा उदिता—कथिता । पादान्तेऽत्र यतिः ॥ ७६ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक पादमें सगण (।।ऽ) जगण (।ऽ।) और फिर दो सगण (।।ऽ) हो तो वह "प्रमिताक्षरा" छन्द कहा गया है ॥ ७६ ॥

## प्रमिताक्षरा छन्दका उदाहरण ।

"अपि शुद्धवाक्यरचनातिशयं परिषिञ्चति श्रवणयोः स्मृतम् ।
प्रमिताक्षरापि विपुलार्थवती तव भारती हरति मे हृदयम् ॥"

## उज्ज्वलाछन्दोलक्षणम् ।

**ननभरसहिताऽभिहितोज्ज्वला ॥ ७७ ॥**

छ० टी०—जगत्यामेव या ननभरसहिता—ननभरैः समन्विता । सा उज्ज्वला अभिहिता—कथिता ॥ ७७ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक पादमें २ नगण (।।।२) १ भगण (ऽ।।) और १ रगण (ऽ।ऽ) हो वह "उज्ज्वला" छन्द कहाता है ॥ ७७ ॥

## उज्ज्वला छन्दका उदाहरण ।

"गुणिपरिषदि यस्य महोज्ज्वला भवति यदि कृतिः कृतिनस्तदा ।
खलु बहुसुकृतानि चकार सः दिवि निवसति पुण्ययुतः सदा ॥"

## वैश्वदेवीछन्दोलक्षणम् ।

**पंचाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ७८ ॥**

छ० टी०—द्वादशाक्षरपादजातावेव ममौ—द्वौ मगणौ । यौ—द्वौ यगणौ । यदा भवतस्तदा वैश्वदेवी भवति । किंभूता ? पञ्चाश्वैः—पञ्चभिः सप्तभिश्च । छिन्ना—कृतयतिरिति । ॥ ७८ ॥

भा० टी०—१२ अक्षरके पादवाली जातिमें जिसके प्रत्येक चरणमें २ मगण (ऽऽऽ) और दो ही यगण (।ऽऽ) हों वह "वैश्वदेवी" छन्द होता है। इसमें ५ और ७ वर्णोंपर विश्राम होता है ॥ ७८ ॥

## वैश्वदेवी छन्दका उदाहरण।

"धन्यः पुण्यात्मा जीविते कोऽपि वंशे तादृक्पुण्योऽसौ येन गोत्रं पवित्रम्।
गोविप्रजातिस्वामिकार्ये प्रवृत्ते शुद्धशास्त्रादौ वैश्वदेवी भवेद्यः॥"

## जलधरमालाछन्दोलक्षणम्।

**अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ॥ ७९॥**

छ० टी०—यदा म्भौ—मगणभगणौ। स्मौ—सगणमगणौ च। भवतस्तदा जलधरमाला स्यात् यतिरत्र अब्ध्यङ्गैः—चतुर्भिरष्टाभिश्च॥ ७९॥

भा० टी०-१२ अक्षरके चरणवाली जातिमें जिसके प्रत्येक चरणमें मगण (ऽऽऽ) भगण (ऽ।।) सगण (।।ऽ) और मगण (ऽऽऽ) हो तो वह "जलधरमाला" छन्द हो। इसमें भी ४ और ८ अक्षरोंपर विश्राम होता है॥७९॥

## जलधरमाला छन्दका उदाहरण।

"यो भक्तानां कलिदुरितोत्तप्तानां तापोच्छेदे जलधरमाला नव्या।
भव्याकारा दिनकरपुत्रीकूले केलीलोला हरितनुरव्यात्सा नः॥"

## मालतीछन्दोलक्षणम्।

**भवति नजावथ मालती जरौ॥ ८०॥**

छ० टी०—यत्र नजौ—नगणजगणौ। अथ—तदनन्तरम्। जरौ—जगणरगणौ। भवतस्तदा मालती—मालतीछन्दो भवति। सप्तभिः पञ्चभिश्चात्रापि यतिः॥८०॥

भा० टी०-१२ अक्षरके पादवाली जातिमें १ नगण (।।।) २ जगण (।ऽ।) और १ रगण (ऽ।ऽ) प्रत्येक पादमें हो तो वह "मालती" छन्द हो यहां पर ७ और ५ अक्षरोंपर विश्राम होताहै॥ ८०॥

## मालती छन्दका उदाहरण।

"इह कलयाच्युतकेलिकानने मधुरससौरभसारलोलुपः।
कुसुमकृतस्मितचारुविभ्रमामलिरपि चुम्बति मालती मुहुः॥"

## तामरसछन्दोलक्षणम्।

**इह वद तामरसं नजजाद्यः॥ ८१॥**

छ० टी०—जगत्यामेव नजजात्—नगणजगणजगणेभ्यः। परो यः—यगणः चेत्तत्तामरसं छन्दः। इह—अस्मिन् प्रकरणे छन्दःशास्त्रे वा। वद—कथय। भो सखे इति शेषः॥ ८१॥

भा० टी०-१२ अक्षरके पादवाली जातिमें यदि १ नगण (।।।) २ जगण (।ऽ।) और १ यगण (।ऽऽ) प्रत्येक पादमें हो तो हे मित्र! उसे तुम "तामरस" छन्द कहो॥ ८१॥

## तामरस छन्दका उदाहरण ।

" स्फुटसुषमामकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो हृदयतडागविकासि ममास्तु ॥"

## पञ्चचामरछन्दोलक्षणम् ।

**जभौ जरौ वदति पञ्चचामरम् ॥ ८२ ॥**

छ० टी०—जगत्यामेव जभौ—जगणभगणौ । जरौ—जगणरगणौ च । भवतस्तद्वृत्त पञ्चचामर वदति ॥ ८२ ॥

भा० टी०—१२अक्षरके पादवाली जातिमें ही जगण (। ऽ ।) भगण ( ऽ।। जगण (। ऽ ।) और रगण ( ऽ । ऽ ) प्रत्येक पादमें हो तो उसे "पञ्चचामर" छन्द कहते हैं ॥ ८२ ॥

## पंचचामर छन्दका उदाहरण ।

" उमाधवं मनसि माधवं नरो निरन्तरं भजति भक्तितत्परः ।
श्रियं हरिः सपदि राति चाक्षरां जनाय सन्मतिमलं महेश्वरः ॥"

## क्षमाछन्दोलक्षणम् ।

**१३ अतिजगत्याम्—तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ८३ ॥**

छ० टी०—अतिजगत्यां—त्रयोदशाक्षरपादजातौ । नौ—द्वौ नगणौ । ततौ—तगणतगणौ । गः—गुरुश्चैकश्चेत्तदा । क्षमा भवति । किंविशिष्टा क्षमा ? तुरगरसयतिः—तुरगैः सप्तभिः रसैः षड्भिर्यतिर्विरतिर्यस्याः सा ॥ ८३ ॥

भा० टी०—अतिजगती ( १३ अक्षरके पादवाली ) जातिमें २ नगण ( ।।। ) २ तगण ( ऽऽ । ) और १ गुरु दीर्घाक्षर प्रत्येक पादमें हो तो वह "क्षमा" छन्द होता है। इसमें ७ और ६ अक्षरोंपर विश्राम होता है ॥ ८३ ॥

## क्षमाका उदाहरण ।

" शरदमृतरुचश्चन्द्रिकाक्षालिते दिनकरतनयातीरदेशे हरिः ।
विहरति रभसा गोपिकाभिः समं त्रिदिवयुवतिभिःकोऽपि देवो यथा॥"

## प्रहर्षिणी छन्दका उदाहरण ।

**म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ८४ ॥**

छ० टी०—त्रयोदशाक्षरपादजातौ म्नौ—मगणनगणौ । ज्रौ—जगणरगणौ । गः—गुरुश्च । त्रिदशयतिः—त्रिभिर्दशभिरक्षरैर्यतिः । इयं प्रहर्षिणी ॥ ८४ ॥

भा० टी०—१३ अक्षरके पादवाली जातिमें मगण ( ऽ ऽ ऽ ) नगण ( । । । जगण ( । ऽ । ) रगण ( ऽ ऽ । ) और १ गुरु प्रत्येक पादमें हो और जिसका विश्राम ३ तथा १० अक्षरोंपर हो वह "प्रहर्षिणी" छन्द जानो ॥ ८४ ॥

## प्रहर्षिणी छन्दका उदाहरण ।

" उत्तुङ्गस्तनकलशद्वया नताङ्गी लोलाक्षी विपुलनितम्बशालिनी च ।
बिम्बोष्ठी नरवरमुष्टिमेयमध्या सा नारी भवति मनः प्रहर्षिणीति॥"

## रुचिराछन्दोलक्षणम् ।

**चतुर्ग्रहैरिह रुचिरा जभौ स्जगाः ॥ ८५ ॥**

छ० टी०—अतिजगत्यामेव यदा जभौ—जगणभगणौ । स्जगाः—सगणजगणगुरवश्च भवन्ति तदा इह—छन्दश्शास्त्रे । रुचिरा भवति चतुर्ग्रहैः—चतुर्भिर्नवभिश्चात्र यतिः ॥ ८५ ॥

भा० टी०–१३ अक्षरके पादवाली जातिमें जगण (। ऽ ।) भगण (ऽ।।) सगण (।। ऽ) जगण (। ऽ ।) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो "रुचिरा" छन्द हो। यहां ४ और ९ वर्णोंपर विश्राम होता है। इसीको प्रभावती कहते हैं ॥ ८५ ॥

## रुचिरा छन्दका उदाहरण ।

" मनीषिता हिमरुचिरापि निष्फला समाकुले खलपटले नमंडले ।
नभस्तले घननिवहैर्निरन्तरे सुधारुचेः करनिकरः करोति किम् ॥"

## मत्तमयूरच्छन्दोलक्षणम् ।

**वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ८६ ॥**

छ० टी०—त्रयोदशाक्षरपादजातावेव म्तौ—मगणतगणौ । यसगाः—यगणसगणगुरवश्च। यदि स्युस्तदा मत्तमयूरं वृत्त भवेत् । यतिरत्र वेदैः—चतुर्भिः । रन्ध्रैः—नवभिश्च । रन्ध्रशब्दस्येन्द्रियवाचकत्वाद्रन्ध्रशब्देनात्र नवाङ्कग्रहणम् ॥ ८६ ॥

भा० टी०–१३ अक्षरके चरणवाली जातिमें मगण (ऽ ऽ ऽ) तगण (ऽ ऽ ।) यगण (। ऽ ऽ) सगण (।। ऽ) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो "मत्तमयूर" छन्द हो। इसमें ४ और ९ वर्णोंपर विश्राम होता है॥ ८६ ॥

## मत्तमयूर छन्दका उदाहरण ।

" व्यूढोरस्कः सिंहसमानानतमध्यःपीनस्कन्धो मांसलहस्तायतबाहुः ।
कम्बुग्रीवः स्निग्धशरीरस्तनुलोमा भुंक्ते राज्यं मत्तमयूराकृतिनेत्रः ॥"

## उपस्थितच्छदोलक्षणम् ।

**उपस्थितमिदं ज्सौ त्सौ यदि गुरुः स्यात् ॥ ८७ ॥**

छ० टी०—त्रयोदशाक्षरपादजातावेव ज्सौ—जगणसगणौ । त्सौ—तगणसगणौ । यदि गुरुश्च स्यात्तदा इदम् उपस्थितं वृत्त स्यात् ॥ ८७ ॥

भा० टी०-१३ अक्षरके चरणवाली जातिमें जगण ( ।ऽ। ) सगण ( ।।ऽ ) तगण ( ऽऽ। ) सगण ( ।।ऽ ) और १ गुरु प्रत्येक पादमें हो तो वह "उपस्थित" छन्द हो ॥ ८७ ॥

## उपस्थित छन्दका उदाहरण ।

" उपस्थितमहोराज्यं सपदि रामो विहाय पितृवाक्याद्यो मुनिविरामः ।
जगाम विपिनं श्यामो विजितकामः सकौशलधवोऽव्याद्वः सदभिरामः"

## मञ्जुभाषिणीछन्दोलक्षणम् ।

**सजसा जगौ भवति मंजुभाषिणी ॥ ८८ ॥**

छ० टी०—यत्र सजसाः—सगणजगणसगणाः । जगौ—जगणगुरू च । भवतः सा मंजुभाषिणी भवति । प्रबोधितापि चेयम् ॥ ८८ ॥

भा० टी०-१३ अक्षरके पादवाली जातिमें सगण ( ।।ऽ ) जगण ( ।ऽ। ) फिर भी सगण ( ।।ऽ ) जगण ( ।ऽ। ) और १ गुरु प्रत्येक पादमें हो तो वह " मंजुभाषिणी" छन्द हो। इसीको प्रबोधिता छन्द भी कहते हैं ॥८८

## मञ्जुभाषिणी छन्दका उदाहरण ।

" अमृतोर्मिशीतलकरेण लालयंस्तनुकान्तिचोरितविलोचनो हरेः ।
नियतं कलानिधिरसोऽतिवल्लवी मुदमच्युते व्यधित मञ्जुभाषिणी"

## चन्द्रिकाछन्दोलक्षणम् ।

**ननतरगुरुभिश्चन्द्रिकाश्वषड्भिः ॥ ८९ ॥**

छ० टी०—अतिजगत्यामेव ननतरगुरुभिः—नगणद्वयतगणरगणगुरुभिः । चन्द्रिकाछन्दो भवति । अश्वषड्भिः—सप्तभिः षड्भिश्चात्र यतिः ॥ ८९ ॥

भा० टी०-१३ अक्षरके पादवाली जातिमें २ नगण ( ।।। ) १ तगण ( ऽऽ। ) १ रगण ( ऽ।ऽ ) और १ गुरु ( दीर्घाक्षर ) प्रत्येक चरणमें होनेसे "चन्द्रिका" छन्द होता है । इसमें ७ और ६ अक्षरपर विश्राम लेना चाहिये ॥ ८९ ॥

## चन्द्रिका छन्दका उदाहरण ।

" समविधुगगने चारुचन्द्रिकैवं बुधवरवदने शब्दचन्द्रिकैवम् ।
शुभमतिधानिके दानचन्द्रिकैवं शिवशिव हृदि मे ज्ञानचन्द्रिका स्तात्"

## मञ्जुहासिनीछन्दोलक्षणम् ।

**जतौ सजौ गो भवति मञ्जुहासिनी ॥ ९० ॥**

छ० टी०—अतिजगत्यामेव जतौ—जगणतगणौ । सजौ—सगणजगणौ । गः—गुरुश्च । तदा मंजुहासिनी भवति ॥ ९० ॥

भा० टी०–१३ अक्षरके पादवाली जातिमें यदि जगण (।ऽ।) तगण (ऽऽ।) सगण (।।ऽ) जगण (।ऽ।) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो वह "मंजुहासिनी" छन्द हो ॥ ९० ॥

## मंजुहासिनी छन्दका उदाहरण ।

"यया स्तुता सा जगति विन्ध्यवासिनी सकृत्सुरूपा विबुधवैरिनाशिनी ।
रमाथवोमा सुमतिसंप्रकाशिनी पतिप्रिया स्त्री भवति मंजुहासिनी ॥"

## नवनंदिनीछन्दोलक्षणम् ।

**नवनंदिनी सजससैर्गुरुयुक्तैः ॥ ९१ ॥**

छ० टी०—त्रयोदशाक्षरपादजातावेव सजससैः—सगणजगणसगणसगणैः । गुरुयुक्तैः—गुरुणा युक्तैः । नवनदिनीनामच्छन्दो भवति । इदमेव कलहंसवृत्तं सिंहनादनाम चापि ॥ ९१ ॥

भा० टी०–१३ अक्षरके पादवाली जातिमें ही सगण (।।ऽ) जगण (।ऽ।) और २ सगण (।।ऽ) तथा १ गुरु प्रत्येक पादमें हो तो वह "नवनंदिनी" नामक छन्द हो। इसीको कलहंस और कहीं सिंहनाद भी कहा है ॥ ९१ ॥

## नवनंदिनी छन्दका उदाहरण ।

"यमुनाविहारकुतुके कलहंसो व्रजकामिनी कमलिनीकृतकेलिः ।
जनचित्तहारिकलकण्ठनिनादः प्रमदं तनोतु तव नन्दतनूजः ॥"

## कुटिलगतिछन्दोलक्षणम् ।

**कुटिलगतिर्नजौ सप्तभिस्तौ गुना ॥ ९२ ॥**

छ० टी०—अतिजगत्यामेव नजौ—नगणजगणौ । तौ—तगणौ । गुना—एकेन गुरुणा सह यदि भवतस्तदा कुटिलगतिच्छन्दस्स्यात् । सप्तभिः—सप्ताक्षरैः । षड्भिश्च यतिरिति शेषः ॥ ९२ ॥

भा० टी०–१३ अक्षरके पादवाली (अतिजगति) जातिमें यदि नगण (।।।) जगण (।ऽ।) २ तगण (ऽऽ।) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो वह "कुटिलगति" छन्द हो। इसमें ७ और ६ अक्षरपर विश्राम होता है ॥ ९२ ॥

### कुटिलगति छन्दका उदाहरण ।

"कुटिलगतिः कुधीर्मानहानिं सदा सरलगतिः सुधीर्याति कीर्तिं पराम् ।
नृपसदसि प्रियो राष्ट्रगोष्ठ्यां प्रियो भवति जनप्रियो मानवः सत्प्रियः ॥"

### असम्बाधाछन्दोलक्षणम् ।

**१४ शक्कर्याम्-म्तौ न्सौ गवाक्षग्रहविरतिरसम्बाधा ॥ ९३ ॥**

छ० टी०-शक्कर्याम्-चतुर्दशाक्षरपादजातौ । म्तौ-मगणतगणौ । न्सौ-नगणसगणौ । गौ-द्वौ गुरू च । स्तस्तद्वृत्तं असंबाधा नाम भवति । अत्र अक्ष-ग्रहविरतिः-अक्षैः पंचभिर्ग्रहैर्नवभिर्यतिः । ॥ ९३ ॥

भा० टी०-शक्करी (१४ अक्षरके पादवाली जाति) में मगण (ऽऽऽ) तगण (ऽऽ।) नगण (।।।) सगण (।।ऽ) और २ गुरु हो तो "असंबाधा" नामका छन्द हो यहां ५ तथा ९ अक्षरोंपर विश्राम होता है ९३

### असंबाधा छन्दका उदाहरण।

"भङ्क्त्वा दुर्गाणि द्रुतवनमखिलं छित्वा हत्वा तत्सैन्यं करितुरगबलं हत्वा ।
येनासंबाधा स्थितिरजनिविपक्षाणां सर्वोर्वीनाथः स जयति नृपतिर्मुञ्जः ॥ "

### अपराजिताछन्दोलक्षणम् ।

**ननरसलघुगैः स्वरैरपराजिता ॥ ९४ ॥**

छ० टी०-चतुर्दशाक्षरपादजातावेव ननरसलघुगैः-नगणनगणरगणसगण-लघुगुरुभिः । अपराजिता भवति । स्वरैः-सप्तभिः यतिश्च ॥ ९४ ॥

भा० टी०-१४ अक्षरके पादवाली जातिमें दो नगण (।।।) १ रगण (ऽ।ऽ) १ सगण (।।ऽ) १ लघु (ह्रस्व) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो वह "अपराजिता" छन्द हो। इसमें सात सात अक्षरोंपर विश्राम होता है ॥ ९४ ॥

### अपराजिता छन्दका उदाहरण ।

"फणिपतिवलयं जटामुकुटोज्ज्वलं मनसिजमथनं त्रिशूलविभूषितम् ।
स्मरसि यदि सखे शिवं शशिशेखरं भवति तव तनुः परैरपराजिता ॥ "

### प्रहरणकलिताछन्दोलक्षणम् ।

**ननभनलगिति प्रहरणकलिता ॥ ९५ ॥**

छ० टी०-चतुर्दशाक्षरपादजातावेव ननभनलग्-द्वौ नगणौ भगणनगणौ लघुगुरू च । इति-रीत्यानया प्रहरणकलिताच्छन्दो भवति । सप्तभिर-त्रापि यतिः ॥ ९५ ॥

भा० टी०-१४ अक्षरके पादवाली जातिमें दो नगण (।।।) एक भगण (ऽ।।) फिर १ नगण (।।।) १ लघु (ह्रस्वाक्षर) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो "प्रहरण कलिता" छन्द हो। इसमें भी सप्ताक्षरपर यति जानो ॥ ९५ ॥

प्रहरणकलिता छन्दका उदाहरण ।

"सुरमुनिमनुजैरुपचितचरणां रिपुभयचकितत्रिभुवनशरणाम् ।
प्रणमत महिषासुरतनुकुपितां प्रहरणकलितां पशुपतिदयिताम् ॥"

वसन्ततिलकाछन्दोलक्षणम् ।

उक्ता वसंततिलका तभजा जगौ गः । सिंहोद्धतेयमुदिता मुनिकाश्यपेन । उद्धर्षणीति गदिता किल सैतवेन । नागेन सैव गदिता मधुमाधवीति ॥ ९६ ॥

छ० टी०-शक्वर्यामेव तभजाः-तगणभगणजगणाः । जगौ-जगणगुरू । गः-पुनरपि गुरुश्चेत् । तदा वसन्ततिलका उक्ता-कथिता । इयमेव-वसन्ततिलकैव । काश्यपेन मुनिना-काश्यपमहर्षिणा । सिंहोद्धता उदिता-वर्णिता । सैतवेन-सैतवमुनिना । किल-निश्चयेन स्वमते वा । इयमेव "उद्धर्षणी" इति गदिता । नागेन-श्रीपिङ्गलाचार्येण । सा एव-वसन्ततिलकैव "मधुमाधवी" इति गदिता । पादान्तेऽत्र यतिः ॥ ९६ ॥

भा० टी०-१४ अक्षरके पादवाली जातिमें १ तगण (ऽऽ।) १ भगण (ऽ।।) २ जगण (।ऽ।) और दो गुरु (दीर्घवर्ण) प्रत्येक पादमें हो तो वह वसन्ततिलका छन्द कहागया है। इसीको काश्यप ऋषिने सिंहोद्धता सैतवमुनिने उद्धर्षिणी और पिङ्गलाचार्यजीने "मधुमाधवी" छन्द कहा है। इसमें पादान्तमें यति होती है ॥ ९६ ॥

वसंततिलका छन्दका उदाहरण ।

"उद्धर्षिणी जनदृशां स्तनभारगुर्वी नीलोत्पलद्युतिमलिम्लुचलोचना च ।
सिंहोन्नतत्रिकतटा कुटिलालकान्ता कान्ता वसन्ततिलका नृपवल्लभासौ॥"

वसुधाछन्दोलक्षणम् ।

सजसाय्लगाश्च वसुधा सपञ्चग्रहैः ॥ ९७ ॥

---

१ सूत्रे तु सिंहोन्नतेति पाठः सूत्रश्च (सिंहोन्नता काश्यपस्य । ७-८)

२ मधुमाधवीत्याख्या चिन्त्या पिंगलाचार्य्यैरनुक्तत्वात् ।

छ० टी०—चतुर्दशाक्षरपादजातौ सजसाय्लगाः—सगणजगणसगणयगण-लघुगुरवश्च । भवन्ति तदा वसुधाछन्दस्स्यात् । पञ्चग्रहैः—पञ्चभिर्नवभिर्यतिः ॥९७॥

भा० टी०—१४ अक्षरके पादवाली जातिमें सगण ( ।।ऽ ) जगण ( ।ऽ। ) सगण ( ।।ऽ ) यगण ( ।ऽऽ ) १ लघु ( ह्रस्व ) और १ गुरु ( दीर्घाक्षर ) प्रत्येक पादमें हो तो " वसुधा " छन्द हो । यहां विश्राम ५ और ९ अक्षरोंपर होता है ॥ ९७ ॥

## वसुधा छन्दका उदाहरण ।

" स्थगयन्त्यमूः शमितजातकार्तस्वराः जलदास्तडित्तुलितकान्ति-
कार्तस्वराः । जगतीरिह च्छुरितचारुकामीकराः सवितुः क्वचित्
कपिशयन्ति चामी कराः ॥"

## इन्दुवदनाछन्दोलक्षणम् ।

### इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ९८ ॥

छ० टी०—चतुर्दशाक्षरपादजातावेव भजसनैः—भगणजगणसगणनगणैः । किंविशिष्टैः ? सगुरुयुग्मैः—गुरुयुग्माभ्यां सहिताः सगुरुयुग्मास्तैः गुरुद्वयेन युक्तैरित्यर्थः । इन्दुवदना नाम छन्दो भवति ॥ ९८ ॥

भा० टी०—१४ अक्षरके पादवाली जातिमें भगण ( ऽ।। ) जगण ( ।ऽ। ) सगण ( ।।ऽ ) नगण ( ।।। ) और दो गुरु ( दीर्घाक्षर ) प्रत्येक पादमें हो तो " इन्दुवदना " छन्द हो ॥ ९८ ॥

## इन्दुवदना छन्दका उदाहरण ।

" मारुतरुतप्रचलितोत्पलदलाक्षं शोभनललाटतटमध्यकृतपुण्ड्रम् ।
रे पथिक संप्रति मधौ मदनबन्धौ संस्मरसि तद्वदनमिन्दुवदनायाः॥"

## अलोलाछन्दोलक्षणम्।

### द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥ ९९ ॥

छ० टी०—चतुर्दशाक्षरपादजातावेव म्सौ—मगणसगणौ । म्भौ—मगणभगणौ । गौ—द्वौ गुरू । चरणे—पादे चेत् तदा अलोलाछन्दो भवति । सप्तभिस्सप्तभिरत्र यतिः ॥ ९९ ॥

भा० टी०—१४ अक्षरकी पादवाली जातिमें मगण ( ऽऽऽ ) सगण ( ।।ऽ ) मगण ( ऽऽऽ ) भगण ( ऽ।। ) और २ गुरु ( दीर्घाक्षर ) प्रत्येक चरणमें हो तो वह "अलोला" छन्द हो । इसीको कहीं लोलाछन्द भी माना है । इसमें सात २ अक्षरोंपर यति होती है ॥ ९९ ॥

## अलोला छन्दका उदाहरण ।

" आत्मारामपदैकव्यापाराभिरतानां संसाराब्धिरगाधस्तेषां गोष्पदमात्रम् ।
अन्तस्तत्त्वसमाधेः प्राणायामनिरोधान्नासावशांतिखिन्ना येषां दृष्टिरलोला"

## कुटिलच्छन्दोलक्षणम् ।

**युगदिग्भिः कुटिलमिति मतं स्भौ न्यौ गौ ॥ १०० ॥**

छ०टी०—चतुर्दशाक्षरपादजातावेव स्भौ—सगणभगणौ । न्यौ—नगणयगणौ। गौ—द्वौ गुरू । स्तस्तद्वृत्त कुटिलम् इति मतम्—कथितम् । युगदिग्भिः—चतुर्भिर्दशभिश्चात्र यतिरिति शेषः ॥ १०० ॥

भा० टी०—१४ अक्षरके पादवाली जातिमें सगण ( ।।ऽ ) भगण ( ऽ।। ) नगण ( ।।। ) यगण ( ।ऽऽ ) और २ गुरु प्रत्येक पादमें हो तो वह "कुटिल" छन्द माना गयाहै । इसमें ४ और १० अक्षरोंपर विश्राम होता है ॥ १०० ॥

## कुटिल छन्दका उदाहरण ।

" बुध शीघ्रं कुटिलमपि नरश्चेन्मित्रं गतलज्जं त्यज कितवतरं सश्चित्रम् ।
धनलुब्धं जनकलहकरञ्च क्रूरं खलु दूतं गृहगृहविचरंस्त्रीशूरम् "(मत्कृति )

## धृतिच्छन्दोलक्षणम् ।

**नजभजलग्युता धृतिरियं कथिता ॥ १०१ ॥**

छ० टी०—नजभजलग्युता—नगणजगणभगणजगणलघुगुरुभिर्युता । इय धृतिः कथिता ॥ १०१ ॥

भा० टी०—१४ अक्षरके पादवाली जातिमे प्रत्येक पादमें जो नगण (।।।) जगण ( ।ऽ। ) भगण ( ।ऽ। ) जगण ( ।ऽ। ) लघु ( ह्रस्व ) और गुरु ( दीर्घ ) युक्त हो वह "धृति" छन्द कहा गया है ॥ १०१ ॥

## धृति छन्दका उदाहरण ।

" विपदि धृतां पदं हरति या च भयं सदसि धृता जनैर्हृदि ददाति धियम् ।
खलु सचिवैर्धृता धृतिरियं सुनयं तव हृदयं करोतु नृप सा सदयम् ॥" (मम)

## हंसश्येनीछन्दोलक्षणम् ।

**म्भौ न्यौ गौ चेज्जलधिदश च हंसश्येनी ॥ १०२ ॥**

छ० टी०—चतुर्दशाक्षरपादजातावेव म्भौ—मगणभगणौ । न्यौ—नगणयगणौ । गौ—द्वौ गुरू चेत् । च तथा । जलधिदश—चतुर्भिर्दशभिर्यतिस्तदा हंसश्येनीछन्दो भवति ॥ १०२ ॥

भा० टी०-यदि १४ अक्षरके पादवाली जातिमें मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) यगण (।ऽऽ) और २ गुरु प्रत्येक पादमें हो तो वह "हंसश्येनी" छन्द हो। यहां ४ और १० अक्षरोंपर विश्राम होता है॥१०२॥

हंसश्येनी छन्दका उदाहरण।

"हर्म्ये हंसीव चलति नवमुक्ताहारा पर्यङ्के या पतति सपदि सालं-
कारा। हंसश्येनी भवति पतिरताल्पाहारा गौराङ्गी स्त्री हिमकरसु-
मुखी स्वाचारा॥" (मत्कृतिः)

चन्द्रौतसश्छन्दोलक्षणम्।

म्भौ न्यौ ल्गौ चेद्भवति जगति चन्द्रौतसः॥ १०३॥

छ० टी०-चतुर्दशाक्षरपादजातावेव म्भौ-मगणभगणौ। न्यौ-नगणयगणौ। ल्गौ-लघुगुरू। चेत्तदा जगति-लोके। चन्द्रौतसश्छन्दो भवति। यतिनियमस्तु हंसश्येनीवदेव॥ १०३॥

भा० टी०-यदि १४ अक्षरकी पादवाली जातिमें मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) यगण (।ऽऽ) १ लघु (ह्रस्व) और १ गुरु (दीर्घाक्षर) प्रत्येक पादमें हो तो लोकमें वह "चन्द्रौतस" छन्द हो। इसमें भी ४ और २० अक्षरोंपर विश्राम होता है॥ १०३॥

चन्द्रौतस छन्दका उदाहरण।

"स्मारंस्मारं स्मरहरमनिशं शङ्करं भक्ताधारं सुभुजगगलहारं परम्।
येनाश्वोग्रंखलुजगति निपीतं गरं वन्दे सर्वं हृदि शशधरमौलिं वरम्॥" मत्कृति.

तनुच्छन्दोलक्षणम्।

देवर वरतनुभनननलघुगैः॥ १०४॥

छ० टी०-देवरेति सम्बोधनम्। भनननलघुगैः-भगणनगणत्रयलघुगुरुभिः। स्यात् तनुच्छन्दः। कुत्रचिदिदमेव चक्रपदम्॥ १०४॥

भा० टी०-१४ अक्षरके पादवाली जातिमें १ भगण (ऽ।।) ३ नगण (।।।) १ लघु और १ गुरु प्रत्येक पादमें होनेसे "तनु" छन्द होता है। इसीको कहीं चक्रपद छन्द भी माना है॥ १०४॥

तनु छन्दका उदाहरण।

"चन्द्रकरनिभतरलतरसुयशः कस्य हि सुहृदय कुमुदमतिशयम्।
काशयति जगति नच रघुवर ते रावणवधकृतजगदुपकृतिजम्॥"

वासन्तीछन्दोलक्षणम्।

मस्तौ नो मो गौ यदि गदिता वासन्तीयम्॥ १०५॥

छ० टी०—चतुर्दशाक्षरपादजातौ मः—मगणः । तः—तगणः । नः—नगणः । मः—मगणः । गौ—द्वौ गुरू चेत् तदा इयं वासन्ती गदिता ॥ १०५ ॥

भा० टी०–१४ अक्षरके पादवाली जातिमें मगण ( ऽऽऽ ) तगण ( ऽऽ। ) नगण ( ।।। ) मगण ( ऽऽऽ ) और दो गुरु ( दीर्घवर्ण ) प्रत्येक पादमें हो तो उसे " वासन्ती " छन्द जानो ॥ १०५ ॥

## वासन्ती छन्दका उदाहरण ।

" भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।
लीलालोलापल्लवविलसद्धस्तोल्लासैः कंसारातौ नृत्यति सदृशी वासन्तीयम् "

## वसन्तच्छन्दोलक्षणम् ।

**भवति ननततैः सप्तभिर्गौ वसन्तः ॥ १०६ ॥**

छ० टी०—चतुर्दशाक्षरपादजातौ—शक्वर्यां । ननततैः— नद्वयेन तद्वयेन च । गौ—द्वौ गुरू । स्तः वसन्तनाम वृत्त भवति । सप्तभिः—सप्ताक्षरैर्यतिः । कुत्रचिदिदमेव नान्दीमुखी नाम ॥ १०६ ॥

भा० टी०– १४ अक्षरके पादवाली जातिमें२नगण ( ।।। )२तगण ( ऽऽ। ) और २ गुरु ( ऽ ) हो तो " वसन्त " नामका छन्द हो । इसमें सात २ अक्षरोंपर विश्राम होता है । इसीका कही नान्दीमुखी छन्द भी नाम दिया है१०६

## वसन्त छन्दका उदाहरण ।

" हरिमिह हृदये चार्चयन्तो हि सन्तः पिकशुककुसुमैश्चाम्रवृक्षा हसन्तः।
नवकमलदले भान्ति भृङ्गा वसन्तः सुरनरसुखदश्चागतोऽयं वसन्तः॥ "

## शशिकलाछन्दोलक्षणम् ।

**१५ अतिशक्वर्याम्–द्विहतहयलघुरथ गिति शशिकला ॥ १०७ ॥**

छ० टी०—१५ अतिशक्वर्या—पञ्चदशाक्षरपादजातौ । द्विहतहयलघु । द्वाभ्या हता आवृता हयाः सप्त लघवो यस्या सा चतुर्दशलघुयुक्तेत्यर्थः । अथ—तदन्ते । ग्—एको गुरुश्चेत् । तदा शशिकला नाम इति । पिङ्गलाचार्यस्तु चन्द्रावर्तेति । सप्तभिरष्टभिर्यतिरत्रेत्याम्नायः ॥ १०७ ॥

भा० टी०–अतिशक्वरी ( १५ अक्षरके पादवाली जाति ) में १४ लघु (ह्रस्व) और अन्तमें १ गुरु ( दीर्घाक्षर )प्रत्येक पादमें हो तो " शशिकला " नामका छन्द जानो । इसीको पिङ्गलाचार्यजीने चन्द्रावती भी कहा है । यहां ७ और ८ अक्षरोंपर विश्राम जानो ॥ १०७ ॥

## शशिकला छन्दका उदाहरण ।

" पटुजवपवनचलितजवलहरी तरलितविहसनिचयरवमुखरम्।विक-
सितकमलसुरभिशुचिसलिलं विचरति पथिकमनसि शरदि सरः ॥ "

## स्रग्छन्दोलक्षणम् ।

**स्रगिति भवति रसनवकयतिरियम् ॥ १०८ ॥**

छ० टी०—इय—शशिकलैव । यदा रसनवकयतिः—षड्भिर्नवभिश्च यतियुता तदा स्रग् इति नाम भवति। मालेय पिङ्गलः ॥ १०८ ॥

भा० टी०—६ और ९ अक्षरोंपर यति (विश्राम) होनेसे यह शशिकलाही " स्रग् " नामक या माला नामक छन्द कहाता है ॥ १०८ ॥

## स्रग् छन्दका उदाहरण ।

" नवविकासितकुवलयदलनयने निगमय नवजलधरमिह गगने।अप-
नयरुषमपसर मम सचिवं यदि रतिसुखमभिलषसि बहुविधम् ॥ "

## मणिगुणनिकरच्छन्दोलक्षणम् ।

**वसुहययतिरिह मणिगुणनिकरः ॥ १०९ ॥**

छ० टी०-इह—अस्मिँश्छन्दश्शास्त्रे । यदा वसुहययतिः—अष्टभिः सप्तभिश्च यतिर्भवति । तदा सैव शशिकला मणिगुणनिकरो नामच्छन्दो भवति॥ १०९॥

भा० टी०—इस छन्दशास्त्रमें जो प्रथम ८ अक्षरोंपर और पश्चात् ७ अक्षरोंपर यति (विश्राम) हो तो वही शशिकला " मणिगुणनिकर " नामक छन्द होजाता है ॥ १०९ ॥

## मणिगुणनिकर छन्दका उदाहरण ।

" कथमपि निपतितमतिमहति पदे नरमनुसरति न कमलमुपचितम् ।
मयि वरयुवतिषु कुचतटनिहतः स्पृशति न वपुरिह मणिगुणनिकरः॥"

## मालिनीछन्दोलक्षणम् ।

**ननमयययुतेयं मालिनी भोगिलोकैः॥ ११० ॥**

छ० टी०—यदा पञ्चदशाक्षरपादजातावेव ननमयययुता—नगणद्वयेन मगणेन यगणद्वयेन च युक्ता । तथा भोगिलोकैः—भोगिभिरष्टाभिर्लोकैस्सप्तभिर्यतिश्च । स्यादियं मालिनी—मालिनीनामच्छन्दो भवति ॥ ११० ॥

भा० टी०—यदि १५ अक्षरवाली पाद जातिमें २ नगण (।।।) मगण (ऽऽऽ) और २ यगण (ऽऽ।) प्रत्येक पादमें हो तथा ८ और ७ वर्णोंपर यति (विराम) हो तो वह " मालिनी " छन्द हो ॥ ११० ॥

## मालिनी छन्दका उदाहरण।

"अतिविपुलललाटं पीवरोरःकपाटं सुघटितदशनोष्ठं व्यालतुल्य-
प्रकोष्ठम्। पुरुषमशनिलेखा लक्षणं वीक्ष्य लक्ष्मी रतिसुरभियशोभि-
र्मालिनी चाभ्युपैति॥"

## प्रभद्रकच्छन्दोलक्षणम्।

**भवति नजौ भजौ रसहितौ प्रभद्रकम्॥ १११॥**

**छ० टी०**—अतिशक्वर्यामेव नजौ—नगणजगणौ। भजौ—भगणजगणौ। रसहितौ—रगणेन सहितौ रसहितौ रगणसमन्वितौ। स्तस्तदा प्रभद्रक नाम छन्दो भवति॥ १११॥

**भा० टी०—१५ अक्षरके पादवाली जाति (अतिशक्वरी) में नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) जगण (।ऽ।) और रगण (ऽ।ऽ) प्रत्येक पादमें हो तो "प्रभद्रक" छन्द हो॥ १११॥**

## प्रभद्रक छन्दका उदाहरण।

"अलभत दुश्चरेण तपसा हिमाद्रिजा यमिह पतिं हरं त्रिजगतामधीश्वरम्।
पवनसमुद्धतानलशिखाहतस्मरो दिशतु सतां सदैव स विभुः प्रभद्रकम्॥"

## एलाछन्दोलक्षणम्।

**सजना नयौ शरदशकविरतिरेला॥ ११२॥**

**छ० टी०**—अतिशक्वर्यामेव सजना—सगणजगणनगणाः। नयौ—नगण-यगणौ च। तथा शरदशकविरतिः—पञ्चभिर्दशभिश्च यतिर्भवति। तदा एलानाम च्छन्दः स्यात्॥ ११२॥

**भा० टी०—१५ अक्षरके पादवाली जातिमें प्रत्येक चरणमें सगण (।।ऽ) जगण (।ऽ।) दो नगण (।।।) और १ यगण (।ऽऽ) हो और ५ तथा १० वर्णोंपर विश्राम हो तो वह "एला" नामका छन्द हो॥ ११२॥**

## एला छन्दका उदाहरण।

"रमणीसुखाद्यदि वहति सुरभिवायुः नियतं हि सा भवति नरपतिसुभोग्या।
स्वपतिप्रिया च भवति बहुधनयुक्ता कमला यथा हरिहृदयवसतिमात्मा॥"

## चन्द्रलेखाछन्दोलक्षणम्।

**म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा॥ ११३॥**

**छ० टी०**—अतिशक्वर्यामेव म्रौ—मगणरगणौ। म्यौ—मगणयगणौ। किवि-

शिष्टौ ? यान्तौ—यगणोऽन्ते ययोस्तौ यगणान्तावित्यर्थः । भवेतां तथा सप्ताष्टभिः—सप्तभिरष्टभिश्चाक्षरैर्यतिश्चेत् तदा चन्द्रलेखानाम छन्दः स्यात् ॥ ११३ ॥

भा० टी०—जो अतिशक्वरी ( १५ अक्षरके पादवली जाति ) में ही मगण (ऽऽऽ) रगण (ऽ।ऽ) मगण (ऽऽऽ) और २ यगण (।ऽऽ) प्रत्येक पादमें हो और ७ तथा ८ अक्षरोंपर विश्राम हो तो वह "चन्द्रलेखा" छन्द हो ॥११३॥

## चन्द्रलेखा छन्दका उदाहरण ।

"विभ्राणश्चन्द्रलेखां चूडामणिस्थानभूतां तार्तीयं चापि नेत्रं जाज्वल्यमाने ललाटे। कण्ठे यस्यास्थिमाला भस्माङ्गरागे शरीरे कल्याणं वो हि दिश्यात् त्रैलोक्यनाथो गिरीशः ॥"

## कामक्रीडाछन्दोलक्षणम् ।

मा वाणाः स्युर्यस्यां सा कामक्रीडा संज्ञातव्या ॥ ११४ ॥

छ० टी०—यस्यां मा—मगणाः । वाणाः—पञ्च पञ्च मगणाः स्युः । सा कामक्रीडा सज्ञातव्या ॥ ११४ ॥

भा० टी०—जिसमें ५ मगण (ऽऽऽ) प्रत्येक पादमें हो उसे "कामक्रीडा" छन्द जानो। इसे सारंगिका भी कहते हैं ॥ ११४ ॥

## कामक्रीडा छन्दका उदाहरण ।

"माकान्ते पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः कान्तं वृत्तं वक्त्रं पूर्णं चन्द्रं मत्वा रात्रौ चेत् । क्षुत्क्षामः प्रौढं चेतश्चेतो राहुः क्रूरः प्राद्यात् तस्माद् ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्तव्या ॥"

## ऋषभवृत्तलक्षणम् ।

भवतः सजौ ससयुतावृषभस्ततो यः ॥ ११५ ॥

छ० टी०—यत्र सजौ—सगणजगणौ । ससयुतौ—ससाभ्यां द्वाभ्यां सगणाभ्यां युतौ समन्वितौ । भवतस्ततोऽग्रे यः—यगणश्च । तद्वृत्तमृषभं नाम ॥ ११५ ॥

भा० टी०—१५ अक्षरकी पादजातिमें सगण (।।ऽ) जगण (।ऽ।) फिर दो सगण (।।ऽ) और १ यगण (।ऽऽ) एवं ५ गण प्रत्येक पादमें हो तो उसे "ऋषभ" छन्द जानो ॥ ११५ ॥

## ऋषभ छन्दका उदाहरण ।

"ऋषभोऽङ्गजः स्ववनितावशगो न यो वै पितृवाक्यकृज्जगति दाशरथिर्यथा सः। लभतेऽचलां सुकमलां सकलां च विद्यां विपुलां ककुप्सु विततां विमलां च कीर्तिम् ॥" ( मम )

## चन्द्रकान्ताछन्दोलक्षणम् ।

**चन्द्रकान्ताभिधा रौ म्यौ यो विरामः स्वराष्टौ ॥ ११६ ॥**

छ० टी–यत्र रौ –द्वौ रगणौ । म्यौ–मगणयगणौ । यः–पुनरपि यगणश्च । तथा स्वराष्टौ विरामः–सप्तभिरष्टभिरक्षरैर्विश्रामः । सा चन्द्रकान्ताभिधा–चन्द्रकान्ता नामच्छन्दः ॥ ११६ ॥

भा० टी०–जिसके प्रत्येक पादमें २ रगण ( ऽ । ऽ ) १ मगण ( ऽ ऽ ऽ ) और फिर २ यगण ( । ऽ ऽ । ) हो तथा ७ और ८ वर्णोंपर विश्राम हो तो वह "चन्द्रकान्ता" छन्द हो ॥ ११६ ॥

## चन्द्रकान्ता छन्दका उदाहरण ।

" स्वर्णवर्णा शुभाङ्गीयं चारुनेत्रा च दान्ता । भर्तृपूजानुरक्ताहो वक्रकृष्णालकान्ता । पश्य तां मित्र पुण्यां साध्वी स्वकान्तेन कान्ता । भाति चन्द्रेण भान्ताभ्रे चन्द्रकान्तेव शान्ता ॥ " ( मत्कृतिः )

## रमणीयकच्छन्दोलक्षणम् ।

**रान्नभद्वितयरैरुदितं रमणीयकम् ॥ ११७ ॥**

छ० टी०–यत्र पञ्चदशाक्षरपादजातौ रात्–रगणात्परैः । नभद्वितयरैः–नगणभगणद्वयरगणैः । रमणीयक वृत्तमुदितम्–कथितम् । स्वराष्टयतिरत्रापि ११७

भा० टी०–१५ अक्षरके पादवाली जातिमे प्रत्येक पादमें रगण ( ऽ । ऽ ) नगण ( । । । ) दो भगण ( ऽ । । ) और १ रगण ( ऽ । ऽ ) होनेसे "रमणीय" छन्द कहा गया है । इसमें भी ७ और ८ अक्षरोपर यति ( विराम ) जानो ११७

## रमणीय छन्दका उदाहरण ।

" यज्ञदानतपसां निचयाच्च हरिस्तवात् पूजनाच्च पितरावनिशं गुरुवन्दनात् । पुण्यतीर्थगमनाद्धृदि मंत्रजपाज्जनो मानुषं वपुरिदं लभते रमणीयकम् ॥ " ( मत्कृतिः )

## ऋषभगजविलसितच्छन्दोलक्षणम् ।

**१६ अष्टौ–भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ११८ ॥**

छ० टी०–अष्टौ–षोडशाक्षरपादजातिस्तत्र । भ्रत्रिनगैः–भगणरगणत्रिनगणगुरुभिः । ऋषभगजविलासितनामच्छन्दो भवति । अत्र स्वरात्–सप्तभ्यो वर्णेभ्यः परम् । खम्–नवाक्षरम् । तत्र यतिः–सप्तभिर्नवभिर्यतिरित्यर्थः ॥ ११८ ॥

भा० टी०–१६ सोला अक्षरके पादवाली ( अष्टि ) जातिमे भगण ( ऽ । । ) रगण ( ऽ । ऽ ) तीन नगण ( । । । ) और २ गुरु ( दीर्घाक्षर ) प्रत्येक पादमें

हो तो वह "ऋषभगजविलसित" नामक छन्द होता है। इसमें ७ और ९ अक्षरोपर विश्राम ( यति ) का नियम है॥ ११९॥

### ऋषभगजविलसित छन्दका उदाहरण।

"आयतबाहुदण्डमुपचितपृथुहृदयं पीनकटिप्रदेशमृषभगजविलसितम्। वीरमुदारसत्त्वमतिशयगुणरसिकं श्रीरतिचञ्चलापि न परिहरति पुरुषम्॥"

### वाणिनीछन्दोलक्षणम्।

**नजभजरैः सदा भवति वाणिनी गयुक्तैः॥ ११९॥**

छ० टी०-षोडशाक्षरपादजातौ नजभजरैः—नगणजगणभगणजगणरगणैः। किंविशिष्टैः? गयुक्तैः —गेन दीर्घाक्षरेण युतैः। सदा वाणिनीछन्दो भवति॥११९॥

भा० टी०-१६ अक्षरके पादवाली ( अष्टि ) जातिमें नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) जगण (।ऽ।) रगण (ऽ।ऽ) और अंतमें १ गुरु (दीर्घाक्षर) युक्त प्रत्येक पादमें होनेसे "वाणिनी" छन्द हो॥ ११९॥

### वाणिनीछन्दका उदाहरण।

"चकितमृगेक्षणा गुरुनितंबबद्धकांची शुभगुणकिंकिणीरवविबोधिता समेतुम्। जनयति वाणिनी चतुरचारुलोलनेत्रा मनसि समादधाति मुदमिन्दुसुन्दरास्या॥"

### मणिकल्पलताछन्दोलक्षणम्।

**नजरभभेन गेन च स्यान्मणिकल्पलता॥ १२०॥**

छ० टी०—नजरभभेन—नगणजगणरगणभगणभगणेन। च—पुनः। गेन—गुरुणा। मणिकल्पलता स्यात्॥ १२०॥

भा० टी०—१६ अक्षरकी पादवाली जातिमें नगण (।।।) जगण (।ऽ।) रगण (ऽ।ऽ) दो भगण (ऽ।।) और १ गुरुवर्ण प्रत्येक पादमें हों तो "मणिकल्पलता" छन्द हो॥ १२०॥

### मणिकल्पलता छन्दका उदाहरण।

अवति जनान्प्रसूः सुतान्येव हि सर्वगता जनक इव श्रियं धियं यच्छति सर्वरता। नृपतिरिवार्चनश्च सर्वत्र तु सर्वमता जगति ददात्यतोऽस्ति विद्यामणिकल्पलता॥" ( मत्कृतिः )

### अश्वगतिच्छन्दोलक्षणम्।

**पञ्चभकारकृताश्वगतिर्यदि चान्तगुरुः॥ १२१॥**

छ० टी०—पञ्चभकारकृता—पञ्चभगणरचिता अश्वगतिर्भवति। यदि च अन्त—गुरुः—अन्ते पंचभगणान्ते गुरुश्चेत्। लीलेयमेवोक्ता कुत्रचित्॥ १२१॥

भा० टी०—जिसके प्रत्येक पादमें ५ भगण (ऽ।।) और अंतमें १ गुरु (दीर्घवर्ण) हो तो उसे "अश्वगति" छन्द जानो। इसीको लीला छन्द भी कहते हैं॥ १२१॥

## अश्वगति छन्दका उदाहरण।

"कुञ्चितकुन्तलशोभितमोहितगोपिगणं चन्द्रनिभं मुखमाशु च दर्शय कृष्ण विभो। कोमलपङ्कजपादयुगं कुरु मच्छरणं नाशय नाशय माधव जन्म ममाशु हरे॥"

## पञ्चचामरच्छन्दोलक्षणम्।

### जरौ जरौ जगाविदं वदंति पंचचामरम्॥ १२२॥

छ० टी०—यत्र जरौ—जगणरगणौ। जरौ—भूयोऽपि जगणरगणौ। जगौ—जगणगुरू च। भवतस्तदा छन्दोविदः पञ्चचामरमिद वृत्तं वदन्ति—कथयन्ति। नाराचमिदमेव॥ १२२॥

भा० टी०—यदि १६ अक्षरवाली जातिके प्रत्येक पादमें जगण (।ऽ।) रगण (ऽ।ऽ) जगण (।ऽ।) रगण (ऽ।ऽ) जगण (।ऽ।) और १ गुरु हो तो उसे "पंचचामर" छन्द कहते हैं। इसीको नाराच भी कहते हैं॥१२२॥

## पञ्चचामर छन्दका उदाहरण।

"यतोऽभवच्चराचरं जगत्तमीश्वरं हरं भजामि चन्द्रशेखरं परात्परं महेश्वरम्। नरामरासुरार्चिताङ्घ्रिसुन्दरं मनोहरं गुणाकरं कृपाकरं नमामि शङ्करं त्वरम्॥" (मम)

## शिखरिणीछन्दोलक्षणम्।

### १७ अत्यष्टौ—रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी॥ १२३॥

छ० टी०—अत्यष्टौ—सप्तदशाक्षरपादजातौ। यत्र यमनसभलाः—यगणमगण-नगणसगणभगणलघवः। गः—गुरुश्च। सा शिखरिणी ज्ञेया। किंविशिष्टा? रसैः—षड्भिः। रुद्रैः—एकादशभिः। छिन्ना—कृतविरतिः॥ १२३॥

भा० टी०—१७ अक्षरकी पादवाली (अत्यष्टि) जातिमें यदि यगण (।ऽऽ) मगण (ऽऽऽ) नगण (।।।) सगण (।।ऽ) भगण (ऽ।।) लघु (ह्रस्व-वर्ण) और १ गुरु (दीर्घवर्ण) प्रत्येक चरणमें हो तो उसे "शिखरिणी" छन्द जानो। शिखरिणी छन्दमें ६ छः और ११ अक्षरपर विश्राम होता है॥१२३॥

शिखरिणी छन्दका उदाहरण ।

" यशःशेषीभूते तुरिनगरनाथे गुणनिधौ प्रवृत्ते वैराग्ये विषयरस निष्क्रान्तमनसाम् । इदनीमस्माकं घनतरुलतानिर्झरवती तपस्तप्तुं चेतो हरति गिरिमाला शिखरिणी ॥ "

पृथ्वीछन्दोलक्षणम् ।

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ १२४ ॥

छ० टी०—अत्यष्टावेव यदि जसौ—जगणसगणौ । जसयलाः—जगणसगणयगणलघवः । गुरुश्च तथा वसुग्रहयतिः—अष्टभिर्नवभिर्यतिः । सा पृथ्वी भवति ॥ १२४

भा० टी०—१७ अक्षरकी पादवाली जातिके प्रत्येक पादमें जगण (।ऽ।) सगण (।।ऽ) फिर भी जगण (।ऽ।) सगण (।।ऽ) यगण (।ऽऽ) १ लघु ( ह्रस्व ) और १ गुरु ( दीर्घ ) वर्ण हो तो वह " पृथ्वी " छन्द हो । इस छन्दमें ८ अक्षर और ९ अक्षरपर विराम होता है ॥ १२४ ॥

पृथ्वी छन्दका उदाहरण ।

"क्षणं रजसि खेलनं क्षणमतीव भूषादरः क्षणं द्रुततरा गतिः क्षणमतीव मन्दा गतिः । क्षणं सरलवीक्षणं क्षणमपाङ्गसंवीक्षणं क्षणक्षणविलक्षणं जयति लक्षणं सुभ्रुवः ॥"

वंशपत्रपतितच्छन्दोलक्षणम् ।

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥१२५॥

छ० टी०—अत्यष्टावेव भरनभनलगैः—भगणरगणनगणभगणनगणलघुगुरुभिः । वंशपत्रपतित छन्दो भवति । दिङ्मुनि—दशभिस्सप्तभिश्चात्र यतिः ॥ १२५ ॥

भा० टी०—१७ अक्षरकी पादवाली जातिके प्रत्येक पादमें भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) नगण (।।।) १ लघु ( ह्रस्व ) और १ गुरु ( दीर्घ ) वर्ण हो तो " वंशपत्रपतित " नामक छन्द हो । इस छन्दमें १० और ७ अक्षरोंपर विश्राम ( यति ) हो ॥ १२५ ॥

वंशपत्रपतित छन्दका उदाहरण ।

" अद्य कुरुष्व कर्म्म सुकृतं यदि परदिवसे मित्र विधेयमास्ते भवतः किमु चरयसि तत । जीवितमल्पकालकलनालघुतरलतरं नश्यति वंशपत्रपतितं हिमसलिलमिव ॥"

हरिणीछन्दोलक्षणम् ।

रसयुगहयैः न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ १२६ ॥

छ० टी०—अत्यष्टावेव यदा न्सौ—नगणसगणौ । म्रौ—मगणरगणौ ।

स्लौ—सगणलघू। गः—गुरुश्च। तदा हरिणीछन्दो भवति। रसयुगहयैः—षड्भिश्चतुर्भिः सप्तभिश्चात्र यतिः। ॥ १२६ ॥

भा० टी०–१७ अक्षरकी पादवाली जातिके प्रत्येक चरणमें जो नगण (।।।) सगण (।।ऽ) मगण (ऽऽऽ) रगण (ऽ।ऽ) सगण (।।ऽ) १ लघु और १ गुरु हो तो वह "हरिणी" छन्द हो। इसमें ६ छः चार ४ और सात ७ अक्षरोंपर यति (विराम) होता है॥ १२६ ॥

### हरिणीछन्दका उदाहरण।

"वदनममलं धत्ते शोभां शशाङ्कसमाश्रितां विपुलजघनं दोलालीलां तनोति मनोभुवः। स्तनपरिसरे हाराः स्फाराः स्फुरन्त्यतिनिर्मलाः किमिह न भवेऽस्या नूनं श्रियो हरिणीदृशः॥"

### मन्दाक्रान्ताछन्दोलक्षणम्।

**मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्॥ १२७॥**

छ० टी०—सप्तदशाक्षरपादजातावेव म्भौ—मगणभगणौ। नतौ—नगणतगणौ। तात्—तगणात्। परौ गुरू—द्वौ गुरू। चेत्तदा मन्दाक्रान्ता नामच्छन्दो भवति। जलधिषडगैः—चतुर्भिः षड्भिः सप्तभिश्च यतिः ॥ १२७ ॥

भा० टी०–१७ अक्षरकी पादवाली जातिमें यदि मगण (ऽऽऽ) भगण (ऽ।।) नगण (।।।) तगण (ऽऽ।) फिर तगण (ऽऽ।) और अन्तमें २ गुरु (दीर्घवर्ण) प्रत्येक पादमें हो तो "मन्दाक्रान्ता" नामक छन्द हो। इसमें ४–६ और ७ अक्षरोंपर विश्राम होता है॥ १२७॥

### मन्दाक्रान्ता छन्दका उदाहरण।

"मन्दाक्रान्ताधरकिसलयं पाणिपद्मं धुनाना गाढाश्लेषप्रणयशिथिला वेपमानाङ्गयष्टिः। स्विद्यद्वक्त्रा पुलकिततनुः किञ्चिदामीलनाक्षी सद्यः प्रीतिं जनयति भृशं नूतनोढा हि वोढुः॥"

### मर्कटच्छन्दोलक्षणम्।

**हयदशभिर्नजौ भजजला गुरुर्मर्कटकम्॥ १२८॥**

छ० टी०—अत्यष्टावेव यदि नजौ—नगणजगणौ। भवतः। तथा भजजलाः—भगणजगणजगणलघवः। गुरुश्च तदा मर्कटक नामच्छन्दः स्यात्। नकुटकमित्यन्ये कुटकमेके। अत्र हयदशभिः—सप्त-दशभिः। यतिः॥ १२८॥

भा० टी०–यदि सतरह अक्षरकी पादजातिके प्रत्येक पादमें नगण (।।।) जगण (।ऽ।) भगण (ऽ।।) जगण (।ऽ।) जगण (।ऽ।) १ लघु और १

गुरु हो तो "मर्कटक" छन्द हो। इसीको कई नकुटक या कुटक छन्द भी कहते हैं। इसमें ७ और १० वर्णोंपर विराम होता है॥ १२८॥

मर्कटक छन्दका उदाहरण।

" जयजय जह्यजामजितदोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः। अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः॥"

कोकिलकच्छन्दोलक्षणम्।

मुनिगुहकार्णवैः कृतयतिं वद कोकिलम्॥ १२९॥

छ० टी०—यदि मर्कटकमेव मुनिगुहकार्णवैः—सप्तषट्चतुर्भिः। कृतयति तदा कोकिलकं नामच्छन्दस्त्वं वद—कथय॥ १२९॥

भा० टी०—जो ७–६ और ४ वर्णोंपर यति (विराम) किया जावे तो उसे "कोकिलक" छन्द कहो। और सब लक्षण मर्कटक छन्दके समान ही रहेंगे किन्तु यतिमात्रका अंतर है॥ १२९॥

कोकिलक छन्दका उदाहरण।

" लसदरुणेक्षणं मधुरभाषणमोदकरं मधुसमयागमे सरसकेलिभिरुल्लसितम्। अलिललितद्युतिं रविसुतावनकोकिलकं ननु कलयामि तं सखि सदा हृदि नन्दसुतम्॥"

अतिशायिनीछन्दोलक्षणम्।

ससजैरतिशायिनी मता भजपरैर्गुरुभ्याम्॥ १३०॥

छ० टी०—सप्तदशाक्षरपादजातावेव भजपरैः—भश्च जश्च भजौ भजौ परावुत्तरौ येषां ते भजपरास्तैस्तादृशैः। ससजैः—सगणसगणजगणैः। गुरुभ्या—गुरुद्वयेन। च अतिशायिनी मता॥ १३०॥

भा० टी०—१७ अक्षरकी पादजातिमें सगण (।।ऽ) सगण (।।ऽ) जगण (।ऽ।) भगण (ऽ।।) जगण (।ऽ।) और दो गुरु प्रत्येक पादमें हो तो वह "अतिशायिनी" छन्द हो॥ १३०॥

अतिशायिनी छन्दका उदाहरण।

" महिला विषमं विचिन्वते पतिपितुःस्वलुब्धा। स्वगृहे ह्यतिशायिनी च या सुचपलासुरूपा। पतिवञ्चनतत्परा छलैः पररतास्ति सद्भिः। कुलटाकुलटा सती न सानिशमविश्वसनीया॥" (मत्कृतिः)

कुसुमितलतावेल्लितच्छन्दोलक्षणम्।

१८ धृतौ—स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लितं म्तौ नयौ यौ॥१३१॥

छ० टी०--अष्टादशाक्षरपादजातौ—धृतौ। म्तौ—मगणतगणौ। नयौ—नगणयगणौ। यौ—यगणौ। भवतस्तथा। भूतर्त्वश्वैः—भूतानि पञ्च ऋतवः षट् अश्वाः सप्त तैर्विरामस्तदा कुसुमितलतावेल्लित नामच्छन्दः स्यात्॥ १३१ ॥

भा० टी०–१८ अक्षरकी पाद जातिमें मगण (ऽऽऽ) तगण (ऽऽ।) नगण (।।।) और २ यगण (।ऽऽ) प्रत्येक पादमें हो तथा ५–६ और ७ अक्षरोंपर विराम हो तो "कुसुमितलतावेल्लित" नामक छन्द हो॥ १३१॥

## कुसुमितलतावेल्लित छन्दका उदाहरण।

"उद्यानाब्जानां प्रचुरधुननप्राप्तसौरभ्यसंपत्कंकोलादीनां कुसुमितलतावेल्लितामाततानः। आगस्त्यो वायुर्विविधसुरतावासजानङ्गनानां स्वेदाम्भोबिन्दून्हरति पुनरप्यादिशन्सङ्गमेच्छाम्॥"

## सालसाछन्दोलक्षणम्।

दशवसुविरतिर्ननौ रैश्चतुर्भिर्युता सालसा॥ १३२॥

छ० टी०—धृतावेव ननौ—द्वौ नगणौ। चतुर्भिः रैः—रगणैश्च। युता—नगणद्वयरगणचतुष्टयसमन्विता। सालसा स्यादत्र दशवसुविरतिः—दशभिरष्टभिश्च विरामः॥ १३२॥

भा० टी० १८ अक्षरकी पादजातिमें जो २ नगण (।।।) और ४ रगण (ऽ।ऽ) युक्त हो वह "सालसा" छन्द हो। यहां १० और ८ अक्षरोंपर विराम होता है॥ १३२॥

## सालसा छन्दका उदाहरण।

"सुतसुत वसु देहगेहे सदा यस्य नुर्लालसा। भगवति भवसिन्धुपोते हरे चेन्मतिः सालसा। मुनिनिवहनिषेवितेऽस्मिन्निदं तेन सद्धारते सुकृतमहह किं कृतं त्रा वपुः प्राप्य वै मानुषम्॥" (मत्कृतिः)

## सिंहविस्फूर्जितच्छन्दोलक्षणम्।

स्याद्भूतर्त्वश्वैर्मौ भ्मौ विरतिश्चेत्सिंहविस्फूर्जितं यौ॥ १३३॥

छ० टी०—यत्र मौ—द्वौ मगणौ। भ्मौ—भगणमगणौ। यौ—यगणौ। स्तस्तथा भूतर्त्वश्वैः—पञ्चषट्सप्तभिश्च। विरतिस्तत् सिंहविस्फूर्जित नामच्छन्दः स्यात्॥ १३३॥

भा० टी०–१८ अक्षरवाली पाद जातिके प्रत्येक पादमें २ मगण (ऽऽऽ) १ भगण (ऽ।।) फिर १ मगण (ऽऽऽ) और २ यगण (।ऽऽ) तथा ५–६ और ७ वर्णोंपर विराम हो तो वह "सिंहविस्फर्जित" छन्द हो॥ १३३॥

## सिंहविस्फूर्जित छन्दका उदाहरण।

"आपद्धन्तारं संग्रामजितारिं सर्वपं सत्यसन्धं सम्पद्दातारं शूरं जन-

वन्द्यं राजसिंहं नृसिंहम् । नीतिज्ञं प्राज्ञं पद्मायतनेत्रं पूर्णकोशं सुमन्त्रिं श्रीशं श्रीरैवं भूर्याति सुभूपं सिंहविस्फूर्जितं वै ॥ " (मत्कृतिः)

## हरनर्तनच्छन्दोलक्षणम् ।

### सौं जजौ भरसंयुतौ करिबाणखैर्हरनर्तनम् ॥ १३४ ॥

छ० टी०-यत्र सौं-रगणसगणौ । जजौ-जगणौ । किंविशिष्टौ ? भरसयुतौ-भगणरगणसहितौ । भवतस्तथा करिबाणखैः-अष्टाभिः पञ्चभिः पञ्चभिश्च यतिः । तद्वृत्त हरनर्तन नाम ॥ १३४ ॥

भा० टी०-यदि १८ अक्षरके पादवाली जातिमें रगण (ऽ। ऽ) सगण (।।ऽ) २ जगण (।ऽ।) फिर भगण (ऽ।।) और रगण (ऽ।ऽ) प्रत्येक पादमें हो तथा ८-५ और ५ वर्णोंपर विराम हो तो वह "हरनर्तन" नामक छन्द हो ॥ १३४ ॥

## हरनर्तन छन्दका उदाहरण ।

" वाद्यवादननायकैः सुरगायकैर्दिवि संस्तुतं खिन्नगोपगणेक्षितं फणिपत्नीभिः परिशोभितम् । नागमूर्ध सुपादयोर्यमुनाह्रदे परिवर्तनं वीक्ष्य विस्मितमानसा ह्यभवन्सुरा हरिनर्तनम् ॥ " (मम)

## मेघविस्फूर्जितच्छन्दोलक्षणम् ।

### १९ अतिधृतौ-रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥ १३९ ॥

छ० टी०-१९ अतिधृतौ-एकोनविंशत्यक्षरपादजातौ । य्मौ-यगणमगणौ । न्सौ-नगणसगणौ । किंविशिष्टौ ? न्सौ-ररगुरुयुतौ रश्च रश्च गुरुश्च ररगुरवस्तैर्युतौ रगणरगणगुरुभिस्संयुतौ भवतस्तदा मेघविस्फूर्जिता स्यादत्र । रसर्त्वश्वैः-षट्षट्सप्ताभिर्यतिः ॥ १३९ ॥

भा० टी०-१९ अक्षरकी पादवाली (अतिधृति) जातिमें यदि यगण (।ऽऽ) मगण (ऽऽऽ) नगण (।।।) सगण (।।ऽ) रगण (ऽ।ऽ) रगण (ऽ।ऽ) और गुरु (दीर्घवर्ण) प्रत्येक पादमें हो तो " मेघविस्फूर्जिता" छन्द हो । यहां ६-६ और ७ अक्षरोंपर विराम जानो ॥ १३५ ॥

## मेघविस्फूर्जिताका उदाहरण ।

" कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेकाः । विनिद्राः कन्दल्यो दिशिदिशि मुदा दर्दुरादृप्तनादाः । निशा नृत्यद्विद्युद्विलसित-लसन्मेघविस्फूर्जिता चेत् । प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्किमन्यत् ॥"

## शार्दूलविक्रीडितच्छन्दोलक्षणम् ।

**सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ १३६ ॥**

छ० टी०—अतिधृतावेव यदा मसजस्तताः—मगणसगणजगणसगणतगणतगणाः । सगुरवः—गुरुणा सहिताः । स्युस्तदा शार्दूलविक्रीडित वृत्त स्यात् । सूर्याश्वैः—द्वादशभिस्सप्तभिश्चात्र यतिः ॥ १३६ ॥

भा० टी०—१९अक्षरकी पादवाली जातिमें मगण ( ऽ ऽ ऽ ) सगण ( । । ऽ) जगण ( । ऽ । ) सगण ( । । ऽ ) दो तगण ( ऽ ऽ । ) और १ 'गुरु प्रत्येक चरणमें हो तो वह "शार्दूलविक्रीडित" छन्द हो । यहां १२ और ७ अक्षरोपर विराम होता है ॥ १३६ ॥

### शार्दूलविक्रीडित छन्दका उदाहरण ।

" कम्बुग्रीवमुदग्रबाहुशिखरं रक्तान्तदीर्घेक्षणं शालप्रांशुशरीरमायतभुजं विस्तीर्णवक्षःस्थलम्।कालस्कन्धमनुद्धतं परिजने गम्भीरधीरस्वनं राज्यश्रीः समुपैति वीरपुरुषं शार्दूलविक्रीडितम् ॥"

## रचनाछन्दोलक्षणम् ।

**नजभयसा जगौ च रचना शूलिककुब्भिरत्र सा ॥ १३७ ॥**

छ० टी०—यत्र नजभयसा—नगणजगणभगणयगणसगणाः । जगौ—जगणगुरू च । च सा रचना अत्र शूलिककुब्भिः—एकादशभिरष्टभिश्च यतिः ॥ १३७॥

भा० टी०—१९ अक्षरकी पादवाली जातिमें नगण (। । । ) जगण (। ऽ । ) भगण ( ऽ । । ) यगण ( । ऽ ऽ ) सगण ( । । ऽ ) जगण ( । ऽ । ) और१ गुरु वर्ण प्रत्येक पादमें हो तो वह "रचना" नामक छन्द हो । यहां ११ और ८ अक्षरोपर विश्राम होता है ॥ १३७ ॥

### रचना छन्दका उदाहरण ।

" कमलज तेऽद्भुतास्ति रचनैका वनितापरो नरो भवति नपुंसकं क्कचिदहोऽज्ञः खलु कोविदोऽपरः।विषममिदं कृतञ्च विधिना सत्स्वपि तद्विभाति किञ्जगति वदन्ति ते समदृशो ये हि बुधास्तवायशः ॥ "

## वल्लकीछन्दोलक्षणम् ।

**भौं जतौ तौ सगुरुकौ यदा दिग्ग्रहच्छेदभाग्वल्लकी ॥ १३८ ॥**

छ० टी०—एकोनविंशत्यक्षरपादजातावेव यदा भौं—रगणभगणौ । जतौ—जगणतगणौ । सगुरुकौ तौ—गुरुणा सहितौ द्वौ तगणौ । भवतस्तदा वल्लकी नामच्छन्दो भवति । दिग्ग्रहच्छेदभाग—दशभिर्नवभिश्चात्र यतिः ॥ १३८ ॥

भा० टी०–१९ अक्षरकी पादवाली जातिमें रगण (ऽ।ऽ) भगण (ऽ।।) जगण(।ऽ।)तीन तगण (ऽऽ।) और१गुरु प्रत्येक पादमें हो तो"वल्लकी" नामका छन्द हो। इसमें १० और ९ अक्षरोंपर विराम होता है ॥ १३८ ॥

## वल्लकी छन्दका उदाहरण ।

" भाति निट्भैरिव मनोहरा यत्करे पाणिजैर्वल्लकी कच्छपी कुन्दक-
लिकालिवद्यन्मुखे शुभ्रदन्तवालिः।दिव्यमाल्याम्बराविभूषणैर्भूषितां
सर्वदां सिद्धिदां नौमि तां संसदि सुबुद्धिदां कोटिचन्द्राननां शारदाम्"

## सुवदनाछन्दोलक्षणम् ।

**२० कृतौ–ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना॥१३९॥**

छ० टी०–कृतौ–विंशत्यक्षरपादजातौ । या मरभनययुता–मगणरगणभगण-नगणयगणसहिता । तथा भ्लौ–भगणलघू । गः–गुरुश्च । सप्ताश्वषड्भिः–सप्त-सप्तषड्भिर्यत्र यतिः । सा सुवदना ज्ञेया ॥ १३९ ॥

भा० टी०–२० अक्षरकी पादजाति ( कृति ) में मगण (ऽऽऽ) रगण (ऽ।।) भगण (ऽ।।) नगण (।।।) यगण (।ऽऽ) भगण (ऽ।।) लघु (ह्रस्व) और गुरु ( दीर्घवर्ण ) प्रत्येक पादमें हो तो वह "सुवदना" नामक छन्द हो। यहां ७-७ और ६ अक्षरोंपर विराम होता है ॥ १३९ ॥

## सुवदना छन्दका उदाहरण ।

" रंभास्तंभोपमोरुः सगुरुघनकुचा सारङ्गनयना मध्यक्षामा सुरोमा-
वलिरमलसद्दृग् चेन्दुवदना । हत्स्थं भावं कटाक्षैर्निजमिव कथ-
यंत्यार्या सुवदना यूनां चेतांसि सद्यो रमयति युवतिः श्लोकोक्ति-
कुशला ॥ "

## वृत्तछन्दोलक्षणम् ।

**त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥१४०॥**

छ० टी०–इह–अस्मिन् विंशत्यक्षरपादजातिप्रकरणे । त्रीरजौ–त्रिस्त्रीन् वारान् रगणजगणौ त्रिवारगुणितौ रगणजगणौ क्रमेण स्यातां ततोऽग्रे । गलौ–गुरुलघू च । ईदृशेन लक्षणेन । वृत्तनाम वृत्तं भवति गुरुलघुक्रमेण विंशत्यक्षराणि भवन्त्यत्रैत्यर्थः । पादान्तेऽत्र यतिः ॥ १४० ॥

भा० टी०– २० अक्षरकी पादवालीजातिके प्रत्येक पादमें रगण (ऽ।ऽ) फिर जगण (।ऽ।) फिर रगण (ऽ।ऽ) फिर जगण (।ऽ।) फिर रगण (ऽ।ऽ) फिर जगण (।ऽ।) अन्तमें १ गुरु और १ लघु हो अर्थात् गुरु लघु

क्रमसे २० हो तो वह " वृत्त नामक " छन्द हो। यहां पादान्तमें विराम होता है॥ १४० ॥

### वृत्त छन्दका उदाहरण।

"सत्समागमाच्च सज्जनोपदेशधारणात्सदा हि। हीनबुद्धयोऽपि मानवाः
सुबुद्धयो भवन्ति संशयो न । सत्यभाषणाच्च मातृपितृसेवया वराः
सुरा इवात्र। वृत्तमेतदुत्तमं हरे शिवस्य चार्चनं धियैकयैव॥ " (मम)

### सुवंशा छन्दो लक्षणम्।

ख्याता पूर्वैः सुवंशा यदि मरभनास्तद्वयं गो गुरुश्च ॥१४१॥

छ० टी०—कृतावेव यदि मरभनाः—मगणरगणभगणनगणाः। तद्वय—तगणद्वयम्। गः पुनश्च गुरुः—गद्वयमित्यर्थः। तदा पूर्वैः—प्राचीनैः। सा सुवंशा ख्याता॥ १४१॥

भा० टी०—२० अक्षरकी पादवाली जातिके प्रत्येक पादमें जो मगण(ऽऽऽ) रगण (ऽ।ऽ) भगण (ऽ।।) नगण (।।।) दो तगण (ऽऽ।) और फिर दो गुरु हो तो वह " सुवंशा " छन्द कहाता है॥ १४१॥

### सुवंशा छन्दका उदाहरण।

" योषस्युत्थाय योषास्ति नमति धवं गेहकार्येषु लग्ना
नित्यं स्नाता सुवस्त्राप्रमुदितवदना कुंकुमाक्तातिभाला।
गेहश्रीः श्रीरिवाढ्या सुसुतजननी सद्गुणालंकृताङ्गी
सा साध्वी सत्यशीला पतिरतिरता श्लाघनीया सुवंशा॥"(मत्कृतिः)

### स्रग्धराछन्दोलक्षणम्।

२१ प्रकृतौ—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥ १४२॥

छ० टी०—प्रकृतौ—एकविंशत्यक्षरपादजातौ। म्रभ्नैः—मगणरगणभगणनगणः। यानां त्रयेण—यगणत्रयेण। च इयं स्रग्धरा कीर्तिता। किंविशिष्टा ? त्रिमुनियतियुता—त्रिभिर्मुनिभिर्यत्या युता—सप्तभिः सप्तभिः सप्तभिश्चाक्षरैः कृतविश्रामेत्यर्थः॥१४२॥

भा० टी०—२१ इक्कीस अक्षरकी पादवाली (प्रकृति) जातिमें मगण (ऽऽऽ) रगण (ऽ।ऽ) भगण (ऽ।।) नगण (।।।) और तीन यगण (।ऽऽ) जिसके प्रत्येक पादमें हो और ७-७-७ वर्णोंपर विराम हो वह " स्रग्धरा " छन्द कहा गया है॥ १४२॥

### स्रग्धरा छन्दका उदाहरण।

" रेवाम्भःशुभ्रदन्ता द्युतिहसितशरच्चन्द्रिकाचारुमूर्ति-
र्माद्यन्मातङ्गलीलागतिरतिविपुलाभोगतुङ्गस्तनी या।

रम्भास्तंभोपमोरूरलिमलिनघनस्निग्धधाम्मिल्लहस्ता
विम्बोष्ठी चारुकण्ठी दिशति रतिसुखं स्रग्धरा सुन्दरीयम् ॥"

भद्रकच्छन्दोलक्षणम् ।

**२२ आकृतौ–भ्रौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम् ॥ १४३ ॥**

छ० टी०—आकृतौ--द्वाविंशत्यक्षरपादजातौ । भ्रौ--भगणरगणौ । नरनाः—नगणरगणनगणाः । रनौ--रगणनगणौ । अथ--तदनन्तरम् । गुरुश्चेत्तदा हि--निश्चयेन । इदं भद्रकं नाम वृत्तम् । किंविशिष्टम् ? दिगर्कविरमम्--दशभिर्द्वादशभिर्विरामो यस्मिंस्तत् ॥ १४३ ॥

भा० टी०—२२ अक्षरकी पादवाली जातिमें जो भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) रगण (ऽ।ऽ) नगण (।।।) रगण (ऽ।ऽ) नगण (।।।) और गुरु प्रत्येक पादमें हो तो उसे "भद्रक" नामका छन्द जानो। इसमें १० और १२ अक्षरोंपर विराम होता है ॥ १४३ ॥

भद्रक छन्दका उदाहरण ।

"देव जगत्त्रयैकतिलक प्रभो प्रणयिलोककल्पविटपिन्
पुण्यवतां शिरोमणिपदव्यभाजि सुरनाथ तैरिह जनैः ।
ये विकचैश्चिराय चरणाम्बुजद्वयमिहार्चयन्ति कुसुमैः
भद्रकगीतिनुतिभिरभिष्टुवन्ति च चरित्रमत्रभवतः ॥"

महास्रग्धराछन्दोलक्षणम् ।

**सजता नसौ ररौ गः वसुतुरगहयैः स्यान्महास्रग्धराख्या॥१४४॥**

छ० टी०—आकृतावेव यदि सजताः—सगणजगणतगणाः । नसौ—नगणसगणौ । ररौ—रगणरगणौ । गः—गुरुश्च । तथा वसुतुरगहयैः—अष्टसप्तसप्तभिर्यतिः । सा महास्रग्धराख्या स्यात् ॥ १४४ ॥

भा० टी०—२२ अक्षरकी पादवाली जातिमें जो सगण (।।ऽ) जगण (।ऽ।) तगण (ऽऽ।) नगण (।।।) सगण (।।ऽ) दो रगण (ऽ।ऽ) और १ गुरु (दीर्घ) वर्ण प्रत्येक पादमें हो तो वह "महास्रग्धरा" नामक छन्द हो। यहां ८ ७ और ७ वर्णोपर विराम होता है ॥ १४४ ॥

महास्रग्धरा छन्दका उदाहरण ।

"खलु मेऽधनी धनी ते भवति सुदयया पण्डितः पण्डितः किं
शृणु ते विनीतिनाकं जगति हि सुजनं चापि कं कोविदं वै ।

भवनं यशः सुमानं शशधरवदनालंकृता चम्पकाङ्गी
सततं नमामि तां त्वां मृगशिशुनयनाऽहो महास्त्रग्धरा श्री ॥" मत्कृतिः )

## अश्वललितच्छन्दोलक्षणम् ।

**२३ विकृतौ–यदिह नजौ भजौ भ्जभलगास्तदाश्वललितं हरार्कयतिमत् ॥ १४५ ॥**

छ० टी०--विकृतौ–त्रयोविंशत्यक्षरपादजातौ । यत्र नजौ–नगणजगणौ । भजौ–भगणजगणौ । भ्जभलगाः–भगणजगणभगणलघुगुरवः । तदा अश्वललितं नामच्छन्दः स्यात् । किं विशिष्टम् ? हरार्कयतिमत्–हरैरेकादशभिरर्कैर्द्वादशभिर्यतिर्विरामो यत्र तत् ॥ १४५ ॥

भा० टी०–२३ अक्षरकी पादवाली जाति ( विकृति ) में नगण ( ।।। ) जगण ( ।ऽ। ) भगण ( ऽ।। ) जगण ( ।ऽ। ) भगण ( ऽ।। ) जगण ( ।ऽ ) भगण ( ऽ।। ) १ लघु और १ गुरु प्रत्येक पादमें हो तो वह " अश्वललित" नामका छन्द हो । इसमें ११ और १२ अक्षरोंपर विराम होता है ॥ १४५ ॥

## अश्वललित छन्दका उदाहरण ।

" पवनविधूतवीचिचपलं विलोकयति जीवितं तनुभृतां
वपुरपि हीयमानमनिशं जरा वनितया वशीकृतमिदम् ।
सपदि निपीडनव्यतिकरं यमादिव नराधिपान्नरपशुः
परवनितामवेक्ष्य कुरुते तथापि हतबुद्धिरश्वललितम् ॥ "

## मत्ताक्रीडच्छन्दोलक्षणम् ।

**मत्ताक्रीडं मौ त्नौ न्लौ गिति भवति वसुशरदशयतियुतम् ॥ १४६ ॥**

छ० टी०–विकृतावेव मौ–द्वौ मगणौ । त्नौ–तगणनगणौ । नौ–द्वौ नगणौ । न्लौ–नगणलघू । ग्–गुरुश्च । इति–अमुना लक्षणेन । मत्ताक्रीड छन्दो भवति । किंविशिष्टं मत्ताक्रीडम् ? वसुशरदशयतियुतम्–अष्टभिः पञ्चभिर्दशभिश्च यतिस्तया समन्वितम् ॥ १४६ ॥

भा० टी०–यदि २३ अक्षरके पादवाली जातिमें दो मगण ( ऽऽऽ ) तगण ( ऽऽ। ) चारनगण ( ।।। ) १ लघु और १ गुरु प्रत्येक पादमें हो तो वह " मत्ताक्रीड" नामका छन्द हो । इसमें ८-५ और १० अक्षरोपर विराम होता है ॥ १४६ ॥

## मत्ताक्रीड छन्दका उदाहरण ।

" हृद्यं मद्यं पीत्वा नारी स्खलितगतिरतिशयरसिकरुषया
मत्ताक्रीडालोलैरङ्गैर्मदमखिलविटजनमनसि कुरुते ।

वीतव्रीडा लीलालापैः श्रवणसुखशुभगसुललितवचना
नृत्यैर्गीतैर्भ्रूविक्षेपैः कलभणितविविधविहगरुतकृतैः ॥"

तन्वीच्छन्दोलक्षणम् ।

२४ संस्कृतौ-भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति तन्वी ॥ १४७ ॥

छ० टी०-संस्कृतौ-चतुर्विंशत्यक्षरपादजातौ । यदि भतनाः-भगणतगण-नगणाः । स्भौ-सगणभगणौ । भनयाः-भगणनगणयगणाश्च । स्युस्तदा तन्वी-छन्दो भवति। इह-तन्वीछन्दसि । भूतमुनीनैर्यतिः-पञ्च सप्त द्वादशभिर्विरामः॥ १४७

भा० टी०-२४ अक्षरके पादवाली जातिके प्रत्येक पादमें जो भगण (ऽ।।) तगण (ऽऽ।) नगण (।।।) सगण (।।ऽ) भगण (ऽ।।) भगण (ऽ।।) नगण (।।।) और यगण (।ऽऽ) हो तो "तन्वी" छन्द हो। इसमें ५-७ और १२ वर्णोंपर विश्राम होता है ॥ १४७ ॥

तन्वी छन्दका उदाहरण ।

" पेशलशब्दा शशधरविशदालंकरणोज्वलसुलालितपादा ।
सुंदरवृत्ता नवरससहिता श्लेषकलाजनजनितसुहर्षा ॥
शोभनवर्णाविलसितललना निर्मललक्षणपरिचयरम्या ।
वेश्मनि तन्वी सुललितवदना सत्कविता भुवि कृतसुकृतानाम् ॥"

क्रौञ्चपदाछन्दोलक्षणम् ।

२५ अभिकृतौ-क्रौञ्चपदा भ्मौ स्भौ नननन्गा इषुशरवसुमुनिविरतिरिह भवेत् ॥ १४८ ॥

छ० टी०-अभिकृतौ-पञ्चविंशत्यक्षरपादजातौ । भ्मौ-भगणमगणौ । स्भौ-सगणभगणौ । नननन्गा-नगणश्चत्वारो गुरुश्चैकः । इषुशरवसुमुनिविरतिः-पंचभिः पचाभिरष्टभिः सप्तभिर्यतिश्चेत् । तदा इह-छन्दश्शास्त्रे । " क्रौञ्चपदा " छन्दो भवेत् ॥ १४८ ॥

भा० टी०-२५ अक्षरकी पादवाली (अभिकृति) जातिमें भगण (ऽ।।) मगण (ऽऽऽ) सगण (।।ऽ) भगण (ऽ।।) ४ नगण (।।।) और १ गुरु (दीर्घवर्ण) प्रत्येक पादमें हो तथा ५-५-८ और ७ अक्षरोंपर विराम हो तो इस छन्दोग्रन्थमें वह " क्रौंचपदा " नामका छन्द हो ॥ १४८ ॥

क्रौञ्चपदा छन्दका उदाहरण ।

" या कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमननुयकठिनौ
दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरतिशयकुटिलगतिः ॥

आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिचितहृदया
सा परिहार्या क्रौंचपदा स्त्री ध्रुवमिह निरवधिसुखमभिलषता ॥ ”

भुजङ्गविजृम्भितच्छन्दोलक्षणम् ।

२६उत्कृतौ—वस्वीशाश्वच्छेदोपेतं। ममतनयुगनरसलगैर्भुजङ्ग-
विजृम्भितम् ॥ १४९ ॥

छ० टी०—२६ उत्कृतौ—षड्विंशत्यक्षरपादजातौ । ममतनयुगनरसलगैः—ममौ च तश्च नयुग च नश्च रश्च सश्च लश्च गश्च तैः द्विमगणतगणत्रिनगणरगण-सगणलघुगुरुभिः । भुजङ्गविजृम्भित नाम वृत्त भवति । किंविशिष्ट तत् ? वस्वीशाश्वच्छेदोपेतम्—अष्टभिरेकादशभिः सप्तभिश्च छेदो विरामस्तेन युक्तम् । ॥ १४९ ॥

भा० टी०—२६ अक्षरकी पादवाली जातिके प्रत्येक पादमें यदि २ मगण (ऽऽऽ) १ तगण (ऽऽ।)३ नगण (।।।)१ रगण (ऽ।ऽ)१ सगण (।।ऽ) १ लघु (ह्रस्व) और १ गुरु (दीर्घ) वर्ण हो तो “ भुजंगविजृंभित ” नामक छन्द हो। इसमें ८–११ और ७ अक्षरोंपर विराम होता है ॥ १४९ ॥

भुजङ्गविजृम्भित छन्दका उदाहरण ।

“ ये सन्नद्धानीकानेकैर्नरतुरगकरिपरिवृतैः समं तव शत्रवो ।
युद्धश्रद्धालुब्धात्मानस्तदभिमुखमपगतधियः पतन्ति धृतायुधाः ॥
ते त्वां दृष्ट्वा संग्रामाग्रे तुडिगनृप कृपणमनसः पतन्ति दिगन्तरं ।
किंवा सोढुं शक्यं मेकैर्बहुभिरपि सविषविषमं भुजङ्गविजृम्भितम् ॥”

अपवाहाख्यवृत्तलक्षणम् ।

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम्॥ १५०

छ० टी०—यत्र मः—एको मगणः । षणनाः—षट्नगणाः । सगग्—सगणो गुरुद्वय च । इति—अमुना प्रकारेण । यदि—यदा । नवरसरसशरयतियुतं—नवभिः षड्भिः षड्भिः पचभिश्च यत्या समन्वितम् । तदा तद्वृत्तमपवाहाख्य स्यात् ॥ १५० ॥

भा० टी०—२६ अक्षरकी पादवाली जातिके प्रत्येक पादमें यदि १ मगण (ऽऽऽ) ६ नगण (।।।) १ सगण (।।ऽ) और २ गुरु वर्ण हो तो वह “ अपवाहाख्य ” छन्द हो । इसमें ९-६-६ और ५ वर्णोंपर विश्राम होता है ॥ १५० ॥

अपवाहाख्य छन्दका उदाहरण ।

“ श्रीकण्ठं त्रिपुरदहनममृतकिरणसकलकलितशिरसं रुद्रं
भूतेशं हतमुनिसुखमखिलभुवननमितचरणयुगमीशानम् ।

सर्वज्ञं वृषभगमनमहिपतिकृतवलयरुचिरकरमाराध्यं
तं वन्दे भवभयभिदमभिमतफलवितरणगुरुमुमया युक्तम् ॥ "

अत्र खलु मूललक्षितोक्तादीनामेते संक्षेपतो भेदाः प्रदर्शितास्सन्त्यन्येऽपि भूयस्तरां भेदास्ते नेह विस्तरभयादुक्ताः ॥

यहां उक्त आदि २६ जातिके संक्षेपसे यह भेद दिखलाये गये हैं इसी प्रकार और भी अनेकानेक भेद हैं पर वे यहां ग्रन्थ विस्तार होनेके भयसे नही कहे गये हैं ॥

इत्युक्तादिसमवृत्तप्रकरणम् ॥

## २७ अथ दण्डकाः ।

**यत्किंचिद् दृश्यते छन्दः षड्विंशत्यक्षराधिकम् ।**
**शेषजात्यादिकं मुक्त्वा तत्सर्वं दण्डजातिमत् ॥ १५१ ॥**

छ० टी०—षड्विंशत्यक्षराया अनन्तर दण्डकस्य पाठात् "दाण्डको नौ रः" इति सूत्राच्च सप्तविंशत्यक्षरत्वमेव प्रथमदण्डकस्योचितम् ॥ १५१ ॥

भा० टी०—२६ अक्षरसे अधिक अक्षरके पादवाला जो कोई छन्द दृष्ट पड़े तो उसे दण्डक ही जानो । परंतु पहिला दण्डक २७ अक्षरके पादसे ही आरंभ होना चाहिये क्योंकि २६ अक्षरके पादवाली ( उत्कृति ) जातिके पश्चात् दण्डकका पाठ होनेसे पिङ्गलाचार्यजीको भी यही अभिमत है । अतएव केदारभट्टजीने भी प्रथम चण्डवृष्टि दण्डकके लक्षणमें २७ अक्षरका ही पाद माना है ॥ १५१ ॥

### चण्डवृष्टिप्रयातदण्डकलक्षणम् ।

**यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रयातो भवेद्दण्डकः १५२**

छ० टी०—इह—अस्मिन् दण्डकजातौ वास्मिन् शास्त्रे । यत्—यदि । नयुगलं—नगणद्वयम् । ततः—नगणद्वयादग्रे । सप्त रेफाः—सप्त रगणाः । तदा चण्डवृष्टिप्रयातदण्डको भवेत् । पादान्तेऽत्र यतिः ॥ १५२ ॥

भा० टी०—यदि दण्डक जातिके प्रत्येक पादमें पहिले २ नगण( ।।। )और फिर सात रगण ( ऽ।ऽ ) एवं २७ अक्षरोंका पाद हो तो " चण्डवृष्टिप्रयात " नामका दण्डक हो । यहां पादान्तमें विराम होता है ॥ १५२ ॥

### चण्डवृष्टिप्रयात दण्डकका उदाहरण ।

" जय जय जय केशवानन्त गोविन्द विष्णो मुरारे हरे पाहि मां सर्वदा
परमपुरुष हा भवाम्भोधिमध्येगतं चण्डवृष्टिप्रयाताकुले वर्त्मनि ।
कथमिह भुवि मामनाथं भवत्पादपद्मार्पितमानसं दीनमुपेक्षसे
भुवनभरणपालने नित्ययुक्तो भवान् भो दयानीरधे धीनिधे श्रीनिधे ॥"

## अर्णादिदण्डकानां लक्षणम् ।

**प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दाम-शङ्खादयः ॥ १५३ ॥**

छ० टी०—यदा नगणद्वयाग्रे प्रतिचरणविवृद्धरेफाः--चरण चरणं प्रति वर्धमाना रगणाः । स्युस्तदा--अर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः दण्डका भवन्ति । आदिशब्दात्कुमदादयोऽपि विज्ञेयाः । भवन्ति चात्र—

" चण्डवृष्टिप्रयाताख्यः प्रथमो नगणद्वयात् ।
रगणः सप्तसङ्ख्यैः स्यादर्णस्त्वष्टाभिरुच्यते ॥ १ ॥
अर्णवो नवाभिज्ञयो व्यालस्तु दशभिर्भवेत् ।
जीमूत एकादशभिः सूर्यैलीलाकरो भवेत् ॥ २ ॥
त्रयोदशभिरुद्दामः शङ्खनामा ततः स्मृतः ।
स चतुर्दशभिज्ञयो दण्डकः कविभिः क्रमात् ॥ ३ ॥ "

इतोऽग्रे कुमुदादयस्तेषामियं कारिका । वर्णत्रिकगणवृद्ध्या नद्वितयाढ्या महामतिभिः ॥ नामकल्पना तु कुमुदतक्षकमञ्जुलवारिधिरित्यादिरूपाः । एवमेकोनसहस्राक्षरपर्यन्ता दण्डकाश्चोक्ताः ॥ १५३ ॥

भा० टी०—यदि २ नगणोके (।।।) आगे प्रत्येक पादमें एक एक रगण (ऽ।ऽ) बढाते जावे तो अर्ण आदि दण्डक हो । जैसे पहिले २ नगण (।।।) और फिर ८ रगण (ऽ।ऽ) हो तो अर्ण। ९ रगण (ऽ।ऽ) हों तो अर्णव। १० रगण हो तो व्याल। ११ रगण हो तो जीमूत। १२ रगण हों तो लीलाकर। १३ रगण हो तो उद्दाम। १४ रगण हो तो शंख नामका दण्डक हो। इसी प्रकार दो नगणके आगे १५ रगण होनेसे कुमुद। १६ रगणसे तक्षक। १७ रगणसे मंजुल। और २ नगणके आगे १८ रगण प्रत्येक पादमें हों तो " वारिधि " नामका दण्डक हो। एवं एक कम हजार ९९९ अक्षर पर्यन्त दण्डक कहे हैं। इनके उदाहरण भागवतके ५ वें स्कंधमें तथा प्रबोधचन्द्रोदय नाटकमें देखो ॥ १५३ ॥

## प्रचितकदण्डकलक्षणम् ।

**प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ १५४ ॥**

इति केदारभट्टकृते वृत्तरत्नाकरे वर्णवृत्तवर्णनं नाम तृतीयोऽध्यायः ॥

**छ० टी०**—नद्वयात्--नगणद्वयात् । उत्तरैः—अग्रगैः । सप्तभिर्यैः—सप्तयगणैः । प्रचितकसमभिधः--प्रचितकसम्यक् अभिधा यस्य सः प्रचितकसमभिधः दण्डकः । धीरधीभिः धीरा धीर्येषां ते धीरधियस्तैः । कविभिः स्मृतः--कथितः । ॥ १५४ ॥

अत्रेदमवधेयम्—श्रीमद्भगवता पिङ्गलाचार्येण नगणद्वयोत्तररेफसप्तकादिभिरेव दण्डकः प्रोक्तस्तथापि केदारभट्टेन ग्रन्थान्तरसम्वादात्कवीनां सप्रयोगाच्च गणान्तरसन्निवेशोऽत्र कृतः संक्षेपतः कथनमेतद्वस्तुतो रगणव्यतिरिक्तैरप्यन्यैर्गणैः प्रचितकदण्डको भवति । तदुक्तं ग्रन्थान्तरे " प्रचितक इति हयसख्यैर्भवेद्दण्डको नद्वयाद्यैर्मतैर्जयैः सभैः समेतः ॥ "

**भा० टी०**—यदि २ नगण ( ।।। ) के आगे ७ यगण ( ।ऽऽ ) हो तो वह "प्रचितक" नामका दंडक कहा गया है । यद्यपि भगवान् पिङ्गलाचार्यजीने दो नगणोंके आगे ७ रगणोंसे ही दण्डक कहा है तथापि केदारभट्टने दूसरे ग्रन्थोंके अभिप्रायसे और कवियोंके प्रयोग ( कविता ) से यहां यगणका भी सन्निवेश किया है ॥ १५४ ॥

## प्रचितक दण्डकका उदाहरण ।

" मुरहर यदुकुलाम्भोधिचन्द्रप्रभो देवकीगर्भरत्नत्रैलोक्यैकनाथ
प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केसरीन्द्र ।
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्ध-
कारप्रणतजनपरितापोग्रदावानलच्छेदमेघ प्रसीद प्रसीद द्रुतं वै॥"

इति श्रीकविराजदाधीचपण्डित ज्ञासरामशास्त्रिविरचितायां
छन्दःसुबोधिन्यां सरलायां च वर्णवृत्तनिरूपणं
नाम तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः ॥ ४ ॥



## अथार्धसमवृत्तप्रकरणम्।

### उपचित्रच्छन्दोलक्षणम्।

**विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ॥१॥**

**छ० टी०**—यदि विषमे दले—प्रथमतृतीयपादात्मकेऽर्धे। सौ—द्वौ सगणौ। ततः सलगाः—सगणलघुगुरवः। युजि—समे द्वितीयचतुर्थचरणात्मकेऽर्धे। भौ—द्वौ भगणौ। ततो भात्—भगणद्वयाग्रे वर्तमानात्तृतीयभगणात्। गुरुकौ—गुरुद्वयञ्चेत्। तदा उपचित्रं नाम वृत्तं भवति॥ दलशब्देनात्रार्धग्रहणमस्ति—"दलमर्धं दलं पद्मदलं हस्त्यादिसाधनम्" इत्यनेकार्थध्वनिरत्रार्धसमवृत्ताध्यायेऽग्रिमश्लोकेष्वपि यत्र यत्र दलपदं नास्ति तत्र तत्रापि दलमित्येव बोध्यम्॥ १ ॥ **सूचना**—अत्र प्रथमपादसदृशस्तृतीयपादः। द्वितीयपादसदृशश्चतुर्थपादः। एवं सर्वत्रार्धसमच्छन्दसि विज्ञेयं प्राज्ञैः॥

**भा० टी०**—यहांसे आगे अर्धसमवृत्तप्रकरणका आरंभ जानो। जो पहिले और तीसरे चरणरूपी विषमपादमयी आधे भागमें अर्थात् छन्दके १ ले और ३ रे पादमें ३ सगण (।।ऽ) १ लघु (ह्रस्व) और १ गुरु (दीर्घ वर्ण) हो तथा समपादमयी आधे भागमें अर्थात् छन्दके दूसरे और ४ थे पाद (चरण) में ३ भगण (ऽ।।) और २ गुरु (दीर्घ) वर्ण हो तो "उपचित्रक" नामका छन्द हो॥ सूचना—अर्धसमवृत्त प्रकरणमें १ ले चरणके समान ३ रा चरण और २ रे चरणके समान ४ था चरण सदा रहता है॥ १॥

### उपचित्र छन्दका उदाहरण।

"अयमत्र नृपः सचिवः स्वसा वेषकुमार इतः प्रतिहारः।
उपचित्रमिदं त्वदरे गृहे वक्ति मिथः किल पान्थसमूहः॥"

### द्रुतमध्याछन्दोलक्षणम्।

**भत्रयमोजगतं गुरुणी चेद्युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २ ॥**

**छ० टी०**—यत्र भत्रयं—भगणत्रयम्। ओजगतं—विषमदलगतं। भवेत् तदन्ते गुरुणी—द्वे गुरुणी भवतः। गुरुणीति सामान्ये नपुंसकम्। युजि च—समपादे

द्वितीयचतुर्थरूपे दले । नजौ--नगणजगणौ । किंविशिष्टौ ? ज्ययुतौ--जगणयगणाभ्यां सहितौ चेत्तत् द्रुतमध्या नाम वृत्तं भवेत् ॥ २ ॥

भा० टी०--१ ले और ३ रे चरणमें ३ भगण ( ऽ।। ) और उनके अन्तमें २ गुरु ( दीर्घ ) वर्ण हों तथा २ रे और ४ थे चरणमें नगण ( ।।। ) जगण ( ।ऽ। ) जगण ( ।ऽ। ) और यगण ( ।ऽऽ ) हो तो "द्रुतमध्या" नामका छन्द हो ॥ २ ॥

## द्रुतमध्या छन्दका उदाहरण ।

" राम दयैकनिधे तव शुद्धं मनसि पुनर्द्रुतमध्यकमेकम् ।
नाम पठन्ति जपन्ति च भक्त्या यमनगरं न हि दृष्टिगमेषाम् ॥ "

## वेगवतीछन्दोलक्षणम् ।

**सयुगात्सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गौ ॥ ३ ॥**

छ० टी०--इह--अस्मिन्नर्धसमप्रकरणे छन्दसि वा । विषमे--प्रथमतृतीयपादरूपे दले । सयुगात्--सगणद्वयात् । सगुरू--सश्च गुरुश्च सगुरू सगणो गुरुश्चैकश्चेत् । युजि--द्वितीयचतुर्थरूपे दले । भौ--द्वौ भगणौ । ततोऽग्रे भात्--पुनर्भगणादेव । गौ--द्वौ गुरू चेत्तदा वेगवती नाम छन्दो भवति ॥ ३ ॥

भा० टी०--१ ले और ३ रे चरणरूपी आधे भागमें ३ सगण ( ।।ऽ ) और १ गुरु ( दीर्घवर्ण ) हो तथा २ रे और ४ थे चरणरूपी दलमें ३ भगण ( ऽ।। ) और २ गुरु ( दीर्घवर्ण ) हो तो "वेगवती" नामका छन्द हो ॥ ३॥

## वेगवती छन्दका उदाहरण ।

" तव मुञ्चनराधिप सेनां वेगवती सहते समरेषु ।
प्रलयोर्मिमिवाभिमुखी तां कः सकलक्षितिभृन्निवहेषु ॥ "

## भद्रविराट्छन्दोलक्षणम् ।

**ओजे तपरौ जरौ गुरुश्चेन्म्सौ ज्गौ ग्भद्रविराड्भवेदनोजे ॥ ४ ॥**

छ० टी०--यत्र ओजे--विषमे दले । तपरौ--तात्परौ । जरौ--जगणरगणौ । गुरुश्चेत् । अनोजे--समदले । म्सौ--मगणसगणौ । ज्गौ--जगणगुरू । ग् पुनरपि गुरुश्च । तद्वृत्तं भद्रविराट्नाम भवेत् ॥ ४ ॥

भा० टी०--जो विषमदल ( १ ले और ३ रे पाद ) में तगण ( ऽऽ। ) जगण ( ।ऽ। ) रगण ( ऽ।ऽ ) और अंतमें १ गुरु ( दीर्घ ) वर्ण हो । तथा समदल ( २ रे और ४ थे पाद ) में मगण ( ऽऽऽ ) सगण ( ।।ऽ ) जगण ( ।ऽ। ) और अन्तमें २ गुरु ( दीर्घवर्ण ) हो तो "भद्रविराट्" छन्द हो॥४॥

भद्रविराट् छन्दका उदाहरण ।

" यत्पादतले चकास्ति चक्रं हस्ते वै कुलिशं सरोरुहं वा ।
राजा जगदेकचक्रवर्ती स्याच्छं भद्रविराट् समश्नुतेऽसौ ॥ "

केतुमतीछन्दोलक्षणम् ।

**असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः ॥ ५ ॥**

छ० टी०—यदा असमे--विषमे दले । सजौ--सगणजगणौ । किंविशिष्टौ सजौ ? सगुरुयुक्तौ--सगणेन गुरुणा च युतौ । भवतः समे--द्वितीयचतुर्थरूपे समदले । भरनगात्--भगणरगणनगणगुरुभ्यः । गः--पुनर्गुरुर्भवति चेत्तदा केतुमतीछन्दः स्यात् ॥ ५ ॥

भा० टी०—यदि विषमदल (१ ले और ३ रे पाद ) में सगण ( ।।ऽ) जगण (।ऽ।) सगण ( ।।ऽ ) और अंतमें १ गुरु (दीर्घ ) वर्ण हो । तथा समदल ( २ रे और ४ थे पाद ) में भगण ( ऽ।। ) रगण ( ऽ।ऽ ) नगण ( ।।। ) और अन्तमें २ गुरु ( दीर्घवर्ण ) हो तो "केतुमती" छन्द हो ॥ ५ ॥

केतुमती छन्दका उदाहरण ।

" शुभलक्ष्मपद्मविलसंती केतुमती विभोः पदततिर्या ।
यमुनातटे विलिखिता वै पातु हरिप्रिया सुमतिदा सा ॥ "

आख्यानिकीछन्दोलक्षणम् ।

**आख्यानिकी[1] तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् ॥ ६ ॥**

छ० टी०—यत्र ओजे--विषमदले । तौ--द्वौ तगणौ । जगुरू--जगणो गुरुश्च । गः--पुनरपि गुरुरेकः । अनोजे--समदले द्वितीयचतुर्थपादरूपे । जतौ-जगणतगणौ । जगुरू--जगणो गुरुश्च । गुरुः--पुनरपि गुरुरेकश्चेत् । तदा आख्यानिकीछन्दो भवेत् ॥ ६ ॥

भा० टी०—यदि विषमदल ( १ ले और ३ रे पाद ) में २ तगण ( ऽऽ। ) १ जगण ( ।ऽ। ) और २ गुरु ( दीर्घवर्ण ) हो तथा समदल ( २ रे और ४ थे पाद ) में जगण (।ऽ।) तगण (ऽऽ।) जगण (।ऽ। ) और अन्तमें २ गुरु ( दीर्घवर्ण ) हो तो " आख्यानिकी " नामका छन्द हो ॥ ६ ॥

आख्यानिकी छन्दका उदाहरण ।

" भृङ्गावलीमङ्गलगीतनादैः जनस्य चित्ते मुदमादधाति ।
आख्यानिकी च स्मरजन्मपाश-महोत्सवस्याप्रवणे क्वणन्ती ॥ "

---

१ आख्यानिकी पाठः साधुः पिंगलोक्तत्वात् ।

विपरीताख्यानिकीछन्दोलक्षणम् ।

**जतौ जगौ गो विषमे समे स्यात् तौ जगौ ग एषा विपरीतपूर्वा ॥७॥**

छ० टी०—यदा विषमे--विषमदले । जतौ--जगणतगणौ । जगौ--जगणगुरू । गः--पुनरपि गुरुः । तथा समे--समदले । तौ--द्वौ तगणौ । जगौ--जगणगुरू । गः--पुनरपि गुरुश्चेत् । तदा एषा विपरीतपूर्वा--विपरीतं पद पूर्वे यस्याः सा । विपरीताख्यानिकी स्यात् ॥ एतयोरुपजात्यन्तर्गतत्वेऽप्यर्द्धसमप्रकरणे विशेषसंज्ञार्थं पाठः । कालिदासेन तु स्वकृतश्रुतबोधे यदेन्द्रवज्राया आद्यचरणत्रयोऽन्ये चरणा उपेन्द्रवज्रायास्तदा विपरीताख्यानिकीति चोक्ता ॥ ७ ॥

भा० टी०—जो विषम दल ( १ ले और ३ रे चरण ) में जगण (।ऽ।) तगण (ऽऽ।) जगण (।ऽ।) और २ गुरु ( दीर्घ ) वर्ण हो तथा समदल ( २ रे और ४ थे चरण ) में दो तगण (ऽऽ।) १ जगण (।ऽ।) और २ गुरु ( दीर्घ ) वर्ण हों तो " विपरीताख्यानिकी " छन्द हो । विशेषतः कालिदासजीने अपने रचित श्रुतबोधमें १ ला चरण इन्द्रवज्राका और शेष तीनों चरण उपेन्द्रवज्राके हो तो विपरीताख्यानिकी हो ऐसा लिखा है। यद्यपि आख्यानिकी और विपरीताख्यानिकी ये दोनों उपजाति छन्दके अन्तर्गत ही हैं तथापि यहां अर्धसमप्रकरणमें विशेष संज्ञाके लिये इन दोनोंका पाठ है ॥ ७ ॥

विपरीताख्यानिकी छन्दका उदाहरण ।

" अलं तवालक्षि वचोभिरेभिः स्वार्थप्रिये साधय कार्यमन्यत् ।
कथं कथावर्णनकौतुकं स्यादाख्यानिकी चेद्विपरीतपूर्वा ॥ "

हरिणप्लुताछन्दोलक्षणम् ।

**सयुगात्सलघू विषमे गुरुर्युजि नभौ च भरौ हरिणप्लुता ॥ ८ ॥**

छ०टी०—यत्र विषमे--विषमदले । सयुगात्--सगणद्वयात् । सलघू--सश्च लघुश्च । सलघू--सगणो लघुश्च । गुरुः--दीर्घश्चैकः । युजि--समदले । नभौ--नगणभगणौ । च--पुनः । भरौ--भगणरगणौ । भवतस्तदा हरिणप्लुतानामछन्दः स्यात् ॥ ८ ॥

भा० टी०—विषमदल ( १ ले और ३ रे चरण ) में ३ सगण (।।ऽ) १ लघु ( ह्रस्व ) और १ गुरु ( दीर्घ ) वर्ण हो तथा समदल ( २ रे और ४ थे चरण में १ नगण (।।।) २ भगण (ऽ।।) और १ रगण (ऽ।ऽ) हो तो " हरिणप्लुता " नामक छन्द हो ॥ ८ ॥

हरिणप्लुता छन्दका उदाहरण ।

" नरपुङ्गनराधिपविद्विषां भयविवर्जितकेतुलघीयसाम् ।

रणभूमिपराङ्मुखवर्त्मनां भवति शीघ्रगतिर्हरिणप्लुता ॥"

## अपरवक्त्रछन्दोलक्षणम्।

**अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ ॥ ९ ॥**

छ० टी०—अयुजि--विषमे दले। ननरलाः--नगणनगणरगणलघवः। गुरुः--दीर्घश्चैकः। समे--समदले। नजौ--नगणजगणौ। जरौ--जगणरगणौ। चेत्तत्--इदम्। अपरवक्त्रनामछन्दः स्यात्। वैतालीयान्तर्गतस्याप्यस्यात्र विशेषसञ्ज्ञार्थमुपन्यासः ॥ ९ ॥

भा० टी०—जो विषमदल (१ले और ३ रे पाद) में २ नगण (।।।) १ रगण (ऽ।ऽ) १ लघु (ह्रस्व) और १ गुरु (दीर्घवर्ण) हो तथा समदल (२ रे और ४ थे पाद) में १ नगण (।।।) २ जगण (।ऽ।) और १ रगण (ऽ।ऽ) हो तो यह "अपरवक्त्र" नामका छन्द हो। यद्यपि यह वैतालीय छन्दके अन्तर्गत ही है तथापि यहां विशेष संज्ञाके अर्थ इसका पाठ है॥ ९ ॥

## अपरवक्त्र छन्दका उदाहरण।

"सकृदपि कृपणेन चक्षुषा नरवर पश्यति यस्तवाननम्।
न पुनरपरवक्त्रमीक्षते स हि सुखितोऽर्थिजनस्तथाविधम् ॥"

## पुष्पिताग्राछन्दोलक्षणम्।

**अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥१०॥**

छ० टी०—यदा अयुजि—विषमेऽर्धे। नयुगरेफतः—नगणद्वयरेफाभ्याम्। परो यकारः—यगणः। युजि—समेऽर्धे। नजौ—नगणजगणौ। च—पुनः। जरगाः—जगणरगणगुरवः। स्युस्तदा पुष्पिताग्रावृत्त भवेत्। औपच्छन्दसिकान्तर्गतत्वेऽप्यस्येह विशेषसञ्ज्ञार्थं पाठः प्रोक्तश्च। "वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चित.। पुष्पिताग्राभिध केचिदौपच्छन्दसिकं तथा॥" महता प्रपञ्चेन किमेतावतैवालं प्राज्ञेषु॥ १०॥

भा० टी०—जो विषमदल (१ले और ३रे पाद) में २ नगण (।।।) १ रगण (ऽ।ऽ) और १ यगण (।ऽऽ) हो। तथा समदल (२ रे और ४ थे पाद) में नगण (।।।) जगण (।ऽ।) जगण (।ऽ।) रगण (ऽ।ऽ) और १ गुरु (दीर्घवर्ण) हो तो "पुष्पिताग्रा" छन्द हो। यद्यपि यह औपच्छन्दसिक छन्दके अन्तर्गत है तथापि यहां विशेष संज्ञाके लिये इसका पाठ है ॥ १०॥

## पुष्पिताग्रा छन्दका उदाहरण।

"समशितदशना मृगायताक्षी स्मितसुभगा प्रियवादिनी विदग्धा।
अपहरति नृणां मनांसि वामा भ्रमरकुलानि लतेव पुष्पिताग्रा ॥"

## यवमतीछन्दोलक्षणम् ।

**स्यादयुग्मके रजौ रजौ समे तु जरौ जरौ गुरुर्यवात्परा मतीयम् ॥११॥**

छ० टी०—यदा अयुग्मके—विषमे दले । रजौ—रगणजगणौ । रजौ—पुनरपि रगणजगणौ । समे—समदले । जरौ—जगणरगणौ । जरौ—पुनरपि जगणरगणौ । गुरुः—दीर्घश्च । तदा इय यवात्—यवशब्दात् । परा—उत्तरा । मती भवती—यवमती भवतीत्यर्थः ॥ ११ ॥

भा० टी०—यदि अयुग्मदल ( १ ले और ३रे पाद ) में रगण ( ऽ । ऽ ) जगण ( । ऽ । )रगण ( ऽ । ऽ ) और जगण ( । ऽ । ) हो तथा समदल( २रे और ४ थे पाद ) में जगण ( । ऽ । ) रगण ( ऽ । ऽ ) जगण ( । ऽ । ) रगण ( ऽ । ऽ ) और अन्तमें १ गुरु ( दीर्घ ) वर्ण हो तो " यवमती " नामक छन्द हो ॥ ११ ॥

## यवमती छन्दका उदाहरण ।

" पद्मकं तु कोमले करे विभाति । प्रशस्तमत्स्यलाञ्छनं पदे च यस्याः ।
सा यवान्विता भवेद्धनाधिका च । समस्तबन्धुपूजिता प्रिया च पत्युः ॥"

## मालभारिणीछन्दोलक्षणम् ।

**विषमे ससजा गुरू अनोजे सभरा यश्च तु मालभारिणीयम् ॥१२॥**

इति केदारभट्टकृते वृत्तरत्नाकरेऽर्धसमवर्णवृत्तकथने चतुर्थोध्यायः ॥

छ० टी०—यत्र विषमे—विषमदले प्रथमतृतीयपादरूपे । ससजाः—सगणसगणजगणाः । गुरू—गुरुद्वय च । तथा अनोजे—समदले द्वितीयचतुर्थपादरूपे । सभराः सगणभगणरगणाः । तु—पुनः । यः—यगणश्च । तदा इय मालभारिणी—मालभारिणीनाम वृत्तं स्यात् ॥ १२ ॥

भा० टी०—जो विषमदल ( १ ले और ३ रे पाद ) में दो सगण ( । । ऽ ) १ जगण ( । ऽ । ) और २ गुरु ( दीर्घ ) वर्ण हो तथा समदल ( २ रे और ४ थे पाद ) में सगण ( । । ऽ ) भगण ( ऽ । । ) रगण ( ऽ । ऽ ) और यगण ( । ऽ ऽ ) हो तो " मालभारिणी " नामक छन्द हो ॥ १२ ॥

## मालभारिणी छन्दका उदाहरण ।

" इह किं नहि पूजिता मयाम्बा भगवत्येव हि मालभारिणीयम् ।
भगवानपि नार्चितः कदासौ कथमेवं च सुगीर्भवेन्ममेड्या ॥ "

इति श्रीकविराजदाधीचपण्डित—ज्ञारसरामशास्त्रिविरचितायां
छन्द.सुबोधिन्यां सरलायां चार्धसमवर्णवृत्तनिरूपणं
नाम चतुर्थोऽध्यायः ॥

# पञ्चमोऽध्यायः।



## अथ विषमवृत्तप्रकरणम्।

### पदचतुरूर्ध्ववृत्तलक्षणम्।

मुखपादोऽष्टभिर्वर्णैः। परेऽस्मान्मकरालयैः क्रमाद्वृद्धाः॥
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यम्।
तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृत्तम्॥ १॥

छ० टी०—व्याख्यायतेऽथ विषमवृत्ताध्यायः। मुखपाद इति। यस्य छन्दसो मुखपादः—आद्यपादः। अष्टभिः—अष्टसख्यकैः। वर्णैः—अक्षरैः भवेत्। तथा अस्मात्—मुखपादात्प्रथमपादात्। परे—अपरेऽग्रेतनास्त्रयः पादाः। द्वितीयतृतीयचतुर्थात्मकाः। मकरालयैः—मकराणामालया मकरालयास्तै.—समुद्रैश्चतुर्भिरक्षरैरित्यर्थः। क्रमात्—क्रमेण। सततम्—अनवरतम्। वृद्धाः—प्रवृद्धा. भवन्ति। यथा प्रथमपादादष्टाक्षरात्मकात् द्वितीयपादो द्वादशाक्षरात्मकस्तृतीयपादष्षोडशाक्षरात्मकश्चतुर्थपादो विंशत्यक्षरात्मकः। अमलधीभिः—निर्मलमतिभिः कविभिः। तत् वृत्त पदचतुरूर्ध्वाभिधम्—पदचतुरूर्ध्वनामकम्। अभिहितम्—भणितम्। किंविशिष्ट तत्? विचित्रैः—विभिन्नलक्षणैः। पादैः—चरणैः। सम्पन्नसौन्दर्यम्—सम्पन्नं सौन्दर्य यस्य, तत्—सम्प्राप्तचारुत्वमिति। गणपदाभावादत्र लघुगुरुश्च नेष्यत इति दिक्॥ १॥

भा० टी०—जिसका पहिला चरण ८ अक्षरोका २ रा चरण १२ अक्षरोका ३ रा चरण १६ अक्षरोका और ४ था चरण २० अक्षरोका होय उसे छन्दशास्त्रके जानने वाले "पदचतुरूर्ध्व" नामका छन्द कहते हैं। इसमें गणोका अभाव होनेसे लघु गुरुका कोई नियम नहीं है॥ १॥

### पदचतुरूर्ध्व छन्दका उदाहरण।

तस्याः कटाक्षविक्षेपैः कंपिततनुकुटिलैरतिदीर्घैः। तक्षकदष्ट इवेन्द्रियशून्यः क्षतचैतन्यः पदचतुरूर्ध्वं न च लाति पुरुषः पतति सहसैव॥ १॥

### आपीडच्छन्दोलक्षणम्।

प्रथममुदितवृत्ते। विरचितविषमचरणभाजि।
गुरुकयुगलकनिधन इह कलितश्चाङ्।
विधृतरुचिरपदवितातियतिरिति भवति पीडः॥ २॥

छ० टी०-इह-अस्मिन्शास्त्रे । प्रथम-पूर्वम् । उदितवृत्ते-प्रतिपादिते छन्दसि पदचतुरूर्ध्वाभिधे । गुरुकयुगलकनिधने-गुरुद्वयमवसाने सति च । आकलितः-आयुक्तः । पीडः--आपीडनाम च्छन्दो भवति । किंविशिष्टे वृत्ते ? विरचितविषम-चरणभाजि--विरचिता ये विषमचरणाः पूर्वापूर्वापेक्षयाधिकचतुर्वर्णैर्युक्तास्तादृशां-श्चरणान्पादान् भजतीतीदृशे । किंविशिष्ट आपीडः ? विधृतरुचिरपदविततियतिः-विधृता रुचिरपदानां वितत्या यतिर्येन स तादृशः । अत्राय विशेषः-पदचतुरू-र्ध्वाभिधे वृत्ते गुरुलघुनियमो नास्त्यापीडे तु चतुर्ष्वपि चरणेषु सर्वे वर्णा लघ-वोऽन्तिमवर्णौ च दीर्घौ कार्यौ ॥ २ ॥

भा० टी०-जिसके पहिले चरणमें ६ अक्षर लघु और अन्तमें २ वर्ण गुरु हों २ रे चरणमें १० वर्ण लघु और अन्तमें २ वर्ण गुरु हों ३ रे चरणमें १४ वर्ण लघु और अन्तमें २ वर्ण गुरु ( दीर्घ ) हों और ४ थे चरणमें १८ वर्ण लगु और अन्तमें २ वर्ण गुरु हों तो वह " आपीड " नामका छन्द हो । पदचतुरूर्ध्व छन्दमें और आपीड छन्दमें इतनी ही विशेषता है कि उसमें लघु गुरुका कोई नियम नहीं और आपीडमें उक्त प्रकारसे लघु गुरुका नियम है ॥ २ ॥

## आपीड छन्दका उदाहरण ।

" कुसुमितसहकारे हतहिममहिमशुचिशशाङ्के । विकसितकमल-सरसि मधुसमयेऽस्मिन् । प्रवससि पथिकहतक यदि भवति तव विपत्तिः ॥"

## कलिकाच्छन्दोलक्षणम् ।

प्रथममितरच्चरणसमुत्थम् । श्रयति जगति लक्ष्म ।
इतरदितरजनितमपि भवति तुर्यम् ।
चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ॥

छ० टी०-तुर्यं--चतुर्थांशः । पादश्चरणो वात्रास्ति । ज्ञेयः पादश्चतुर्थांश इति प्रथमाध्याय उक्तत्वात् । यदा आपीडस्यैव प्रथमं तुर्य--प्रथमश्चरणो द्वाद-क्षरात्मकः । इतरच्चरणसमुत्थम्--इतरस्माच्चरणाद्द्वितीयचरणात् समुत्थमुत्पन्नम् । द्वितीयचरणोद्भवं द्वादशाक्षररूप लक्ष्म--लक्षण श्रयति ॥ इतरत्--द्वितीयचरणो द्वादशाक्षरात्मकः । इतरजनितम्--इतरस्मात्प्रथमाज्जनितं समुत्पन्नमष्टाक्षररूपम् । प्रथमपादीयलक्ष्म--लक्षणम् अपि श्रयति । शेषम्--अवशिष्टम् । अपर चरणयुग-

लक--तृतीयचतुर्थचरणात्मकम् । अविकृतं--विकाररहितमापीडापेक्षयाऽप्राधान्य-थाभावम् । षोडशविंशत्यक्षररूपमेव भवति । सा जगति--लोके । कलिका इति--कलिकानामच्छन्दः स्यात् । मञ्जरीत्येके ॥ ३ ॥

**भा० टी०—जो आपीड छन्दका १ चरण (८ अक्षरका) २ रे चरणके स्थानमें हो और २ रा चरण ( १२ अक्षरका ) पहिले चरणके स्थानमें हो । ३ रा चरण ( १६ अक्षरका ) और ४ था चरण ( २० अक्षरका ) ये दोनो अपने अपने स्थानमें जैसेके वैसेही हो तो " कलिका " नामका छन्द हो । इसीको मञ्जरी भी कहते हैं ॥ ३ ॥**

## कलिका छन्दका उदाहरण ।

" हरिसुचरणशरणगतस्य । प्रभवति यमभीः किम् । जगति
स सुकृतिरमलमतिरपि भक्तश्चलति नहि पितृपतिपथि
कुमतिरिव हरिरक्तः ॥ " (मत्कृति. )

## लवलीछन्दोलक्षणम् ।

**द्विगुरुयुतसकलचरणान्ता । मुखचरणरचितमनुभवति तृतीयः ॥**
**चरण इह हि लक्ष्म । प्रकृतमपरमखिलमपि यदि भवति लवली सा ॥४**

**छ० टी०**—यदि इह—अस्मिन्प्रकरणे छन्दसि वा । हि—निश्चितं । तृतीयचरण.—षोडशवर्णात्मकः । मुखचरणरचितम्—प्रथमपादसमभवमष्टाक्षररूपम् । लक्ष्म चिह्नम् । अनुभवति—आश्रयते । अपरं—प्रथमचरणादिकम् । अखिलं—समग्रम् । अपि प्रकृतं—कलिकाया प्रकर्षेण कृत । प्रथममितरचरणसमुत्थमित्यादिरूप लक्ष्म लक्षणम् । अनुभवति तदा सा लवली भवति—लवली नाम छन्दः स्यात् । किंविशिष्टा लवली ? द्विगुरुयुतसकलचरणान्ता—द्वाभ्यां गुरुभ्यां युतः सकलचरणाना अन्ते यस्याः सा । अत्रायमाशयः—प्रथमचरणस्थाने द्वितीयचरणलक्ष्म—द्वादशाक्षररूपम् । द्वितीयचरणस्थाने तृतीयचरणलक्ष्म—षोडशाक्षररूपम् । तृतीयचरणस्थाने प्रथमचरणलक्ष्म—अष्टाक्षररूप भवति चतुर्थचरणस्तु स्वस्थानेऽविकृतो विकाररहितो विंशत्यक्षरात्मक एव स्यात्तथा पादचतुष्केष्वप्यन्ते गुरुद्वयमन्ये सर्वे वर्णा लघव एवापीडवदिति नियमः ॥ ४ ॥

**भा० टी०—यदि आपीड छन्दका पहिला ८ अक्षरवाला चरण ३ रे चरणके स्थानमें हो । २ रा १२ अक्षरवाला चरण १ ले चरणके स्थानमें हो । ३ रा १६ अक्षरवाला चरण २ रे चरणके स्थानमें हो और ४ था २० अक्षरवाला**

चरण अपने ही स्थानमें ज्योंका त्यों अपने रूपयुक्त हो तो लवली नामका छन्द हो। ध्यान रहे कि " लवली " छन्दके ४ रो चरणोंमें अन्त २ के दो वर्ण गुरु और शेषवर्ण लघु आपीडके समान ही रहते हैं ॥ ४ ॥

### लवली छन्दका उदाहरण।

" प्रणवमहरहर्मनसि मर्त्यो जपति जननिकर जगति जयति मृत्युम्। व्रजति स खलु सत्ये। ध्रुव इव वियति यमनियमनिपुणसुधिष्णो यः ॥" ( मत्कृति )

### अमृतधाराछन्दोलक्षणम्।

**प्रथममधिवसति यदि तुर्यं चरमचरणपदमवसितगुरुयुग्मा। निखिलमपरमुपरितनसममिह ललितपाद। त्रितयममृतधारा ॥ ५॥**

छ० टी०—इह—शास्त्रे। यद्यापीडस्य प्रथम तूर्य—प्रथमश्चरणोऽष्टाक्षरात्मकः। चरमचरणपद—चतुर्थचरणस्थान। " पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः। अधिवसति—आश्रयति। अपरम्—अन्यत्। निखिल—समस्तं। ललित-पादत्रितयं द्वितीयतृतीयचतुर्थचरणात्मकम्। उपरितनसमं—स्वस्वापेक्षया उपरि-तना ये पादास्तत्तुल्यं स्यात्तदा अमृतधारा—अमृतधारा नामच्छन्दो भवति। किंविशिष्टा अमृतधारा? अवसितगुरुयुग्मा—अवसितौ प्रतिचरणावसाने गुरुयुग्म यस्याः सा। अयमाशयः=अमृतधारायाश्चतुर्थश्चरणोऽष्टाक्षरात्मकः। तृतीयश्चरणो विंशत्यक्षरात्मकः द्वितीयश्चरणो षोडषाक्षरात्मकः। प्रथमश्चरणो द्वादशाक्षरात्मको भवतीति ॥ ५ ॥

भा० टी०—यदि आपीडका पहिला चरण ( ८ अक्षरवाला ) ४ थे चरणके स्थानमें हो। दूसरा चरण ( १२ अक्षरवाला ) १ ले चरणके स्थानमें हो। तीसरा चरण ( १६ अक्षरवाला ) २ रे चरणके स्थानमें हो और चौथा चरण ( २० अक्षरवाला ) ३ रे चरणके स्थानमें हो तो "अमृतधारा" नामका छन्द हो। ध्यान रहे कि, अमृतधाराका पहिला चरण १२ अक्षरका। दूसरा चरण १६ अक्षरका। तीसरा चरण २० अक्षरका और चौथा चरण ८ अक्षरका होता है। प्रत्येक चरणमें अन्त २ के दो वर्ण गुरु और शेष वर्ण लघु आपीडके समान ही होते हैं ॥ ५ ॥

### अमृतधारा छन्दका उदाहरण।

" जनमुखगतयदमृतपानाद्वृजिनमपहरति जनयति सुकृतं या। नयति दिवि कलिमलमलिनमतिमपि भुवि गङ्गास्ति च सद-मृतधारा ॥ १ ॥" ( मत्कृतिः )

अत्रैवमवधेयम्=श्रीमत्पिङ्गलाचार्यैस्तु पदचतुरूर्ध्ववृत्तप्रथमपादस्यैव द्वितीयतृतीय चतुर्थचरणैर्विपर्य्यासे सति मञ्जरी लवल्यमृतधारा प्रोक्ता । तथाच सूत्रम्–

"प्रथमस्य विपर्यासे मञ्जरी लवल्यमृतधारा । ५–२९ ।"

अस्यायमर्थः–आपीडग्रहणं तेनैव साकं लघ्वक्षरानुज्ञानञ्च निवृत्तमतस्तदेव पदचतुरूर्द्ध्वं प्रथमस्य ( प्रथमपादस्य ) द्वितीयेन पादेन विपर्य्यासे मञ्जरी प्रथमपादस्य तृतीयपादेन विपर्य्यासे लवली । प्रथमपादस्य चतुर्थपादेन विपर्य्यासे अमृतधाराभिधानं भवतीति ॥

श्रीमत्पिङ्गलाचार्यजीने तो पदचतुरूर्ध्वछन्दके प्रथम चरणका दूसरे तीसरे और चौथे चरणसे बदलाव होनेपर ही १ मञ्जरी २लवली ३ और अमृतधारा कही है । जैसे पदचतुरूर्ध्व छन्दका पहिला ८ अक्षरका चरण दूसरे चरणके स्थानमें हो और दूसरा जो कि १२ अक्षरका चरण है वह पहिले चरणके स्थानमें हो शेष ज्योंका त्यों हो तो मञ्जरी छन्द हो ॥१॥ १ ला ८ अक्षरवाला चरण ३ रे चरणके स्थानमें हो और तीसरा १६ अक्षरका चरण पहिले चरणके स्थानमें हो तो शेष चरण ज्योंके त्यों हो तो लवली छन्द हो ॥ २ ॥ इसी प्रकार पहिला ८ अक्षरका चरण चौथे चरणके स्थानमें हो और चौथा २० अक्षरका चरण पहले चरणके स्थानमें हो शेष चरण ज्योंके त्यों अपने २ स्थानमें हो तो अमृतधारा छन्द हो। उक्त तीनों छन्दोंमें गुरु लघुका कोई नियम नहीं । नीचे इन तीनोंके उदाहरण देखो–

### मञ्जरीका उदाहरण ।

" जनयति महती प्रीतिं हृदये। कामिनां चूतमञ्जरी । मिलदलिचक्रचञ्चुप रिचुम्बितकेशरा । कोमलमलयवातपरिवर्तिततरुशिखरस्थिता ॥"

### लवलीका उदाहरण ।

" विरहविधुरहूणकाङ्गनाकपोलोपम । परिणतिधरं पीतपाण्डुच्छवि । लवलीफलनिदाघे । भवति जगति हिमकरशीतलमतिस्वादूष्णाहरम्"

### अमृतधाराका उदाहरण ।

" परिवाञ्छसि कर्णरसायनं सततममृतधाराभिर्यदि हृदि वा परमानन्दवशम् । चेतः शृणु धरणीधर वाणीममृतमयी तत्काव्यगुणभूषणम्॥"

इति पदचतुरूर्ध्वाधिकारः ॥

---

### उद्गताछन्दोलक्षणम् ।

सजमादिमे सलघुकौ च । नसजगुरुकेष्वथोद्गता ॥
त्र्यङ्घ्रिगतभनजला गयुताः । सजसा जगौ चरणमकेतः पठेत् ॥६॥

छ० टी०—आदिमे—प्रथमे पादे । सजं—सश्च जश्च सजं समाहारद्वन्द्वत्वादेकवचनम् । च—पुनः । सलघुकौ—सश्च लघुकश्च सलघुकौ । अथ—द्वितीयपादे । नसजगुरुकेषु—नगणसगणजगणगुरुषु । सत्सु तथा त्र्यंघ्रिगतभनजलाः—त्रिशब्दोऽत्र तृतीयवाचकेस्त्यतस्त्रिश्चासावंघ्रिश्च त्र्यंघ्रि तृतीयपादस्तत्र गता भगणनगणजगणलघवः । गुरुयुताः—गुरुणैकेन युक्ताः स्युः । तथा चरणम्—अवशिष्टचरणं चतुर्थपाद । सजसाः—सगणजगणसगणाः । जगौ—जगणो गुरुश्च । सजसजगात्मकमेवम्भूतम् । यदा ।एकतः—एकस्मिन्भागे चतुर्थभागे पठेत्तदा उद्गता—उद्गतानाम वृत्तं भवति । कुत्रचिच्चरममेकतः पठेदित्यपि पाठः । अस्मद्विचारे तु चरणमन्तिम पठेदेवं चेत्पाठः साधुः क्लिष्टकल्पनाभावात् । सजसाजगावित्यस्यात्र चरणमित्यनेन सामानाधिकरण्य तु " रक्षोहागमलघ्वसदेहाः प्रयोजनम् " इति महाभाष्ये प्रयोगात् । " प्रत्यक्षानुमानशब्दाः प्रमाणानि " इति । पातञ्जलयोगदर्शनेऽपि प्रयोगदर्शनाच्च वेदाः प्रमाणमितिवत्समर्थनीयम् । तथाहि=वेदाः प्रमाणं स्मृतयः प्रमाण धर्मार्थरूप वचन प्रमाणम् ॥ यस्य प्रमाण न भवेत्प्रमाण कस्तस्य कुर्याद्वचन प्रमाणम् ॥ १ ॥ विषमवृत्तत्वादुद्गतायाः प्रथमे पादे दशाक्षराणि । द्वितीयपादेऽपि दशाक्षराणि ॥ तृतीयपादे चैकादशाक्षराणि । चतुर्थपादे त्रयोदशाक्षराणि च भवन्ति ॥ ६ ॥

भा० टी०—जो प्रथम चरणमें सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) और १ लघु (ह्रस्व) हो । दूसरे चरणमें नगण (।।।) सगण (।।ऽ) जगण (।ऽ।) और १ गुरु (दीर्घ) वर्ण हो तीसरे चरणमें भगण (ऽ।।) नगण (।।।) जगण (।ऽ।) १ लघु ( ह्रस्व ) और १ गुरु (दीर्घ) हो और ४ थे चरणमें सगण (।।ऽ) जगण (।ऽ।) सगण (।।ऽ) जगण (।ऽ।) और १ गुरु (दीर्घ) वर्ण हो तो " उद्गता " नामका छन्द हो ॥ ६ ॥

## उद्गता च्छन्दका उदाहरण ।

" मृगलोचना शशिमुखी च । रुचिरदशना नितम्बिनी ॥
हंसललितगमना ललना । परिणीयते यदि भवेत् कुलोद्गता ॥ "

## सौरभकच्छन्दोलक्षणम् ।

चरणत्रयं भजति लक्ष्म यदि सकलमुद्गतागतम् । नौ भगौ
भवति सौरभकं चरणे यदीह भवतस्तृतीयके ॥ ७ ॥

छ० टी०—इह—छन्दसि । तृतीयके चरणे—तृतीयपादे । नौं—रगणनगणौ । भगौ—भगणगुरू च । यदि भवतः । तथा चरणत्रय—तृतीयवर्ज्यमपर प्रथमद्वितीयचतुर्थात्मक पादत्रयं । यदि उद्गतागत सकल—समग्रं । लक्ष्म—लक्षण । भजति तदा सौरभक छन्दो भवति ॥ ७ ॥

भा० टी०—यदि तीसरे चरणमें रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) और १ गुरु ( दीर्घ ) वर्ण हो शेष तीनो चरण ( १-२-४ ) उद्गता छन्दके समान लक्षणवाले ही हो तो "सौरभक" छन्द हो ॥ ७ ॥

### सौरभक छन्दका उदाहरण ।

"विनिवारितोऽपि नयनेन । तदपि किमिहाग्रतो भवान् ।
एतदेव तव सौरभकं । यदुदीरितार्थमपि नावबुध्यते ॥"

### ललितच्छन्दोलक्षणम् ।

नयुगं सकारयुगलं च । भजति चरणं तृतीयकम् ॥
तदुदितमुरुमतिभिर्ललितं । यदि शेषमस्य खलु पूर्वतुल्यकम्॥८॥

छ० टी०—यदि—यदा । नयुगं—नगणद्वय । च—पुनः । सयुगल—सगणद्वयं च । अस्य—वृत्तस्य । तृतीयक चरणं—तृतीयपादम् भजति । शेषम्—अवशिष्टचरणत्रय प्रथमद्वितीयचतुर्थात्मक । पूर्वतुल्यक—उद्गतासमानं । खलु भवति तत्—वृत्तम् । उरुमतिभिः । प्रचुरधीभिः ललितम् उदितम्—उक्तम् ॥ ८ ॥

भा० टी०—जो तीसरे चरणमें दो नगण (।।।) और दो सगण हो । शेष ( तीनों चरण —१—२ और ४ था ) ये उद्गताके समान ही हो तो वह कवियोंद्वारा "ललित" नामक छन्द कहा गया है ॥ ८ ॥

### ललित छन्दका उदाहरण ।

"सततं प्रियम्वदमलूनममलहृदयं गुणोत्तरम् ।
सुललितमतिकमनीयतनुपुरुषं त्यजंति नतु जातु योषितः ॥"

इत्युद्गताप्रकरणम् ॥

---

### उपस्थितप्रचुपितच्छन्दोलक्षणम् ।

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्य—
त्रितयं सनजरगास्तथा ननौ सः ॥
त्रिनपरिकलितजयौ ।
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥

छ० टी०–म्सौ–मगणसगणौ । ज्भौ–जगणभगणौ । गौ गुरुद्वयं । चैवमेकतः प्रथमांघ्रिः–मगणसगणजगणभगणगुरुद्वयात्मकः प्रथमश्चरणः सिध्यति। अन्यत् त्रितय–द्वितीयतृतीयचतुर्थचरणात्मकम् । पृथक्–परस्परापेक्षया भिन्नभिन्नलक्षण भवत्येव तद्यथा द्वितीये चरणे सनजरगाः–सगणनगणजगणरगणगुरवः। तथा तृतीये चरणे । ननौ–द्वौ नगणौ । सः–सगणश्चैकः । चतुर्थे चरणे तु त्रिनपरिकलितजयौ–त्रयश्च ते नाश्च त्रिनास्तैस्त्रिनैस्त्रिभिर्नगणैः परिकलितौ युक्तौ जयौ जगणयगणौ चेत् । तदा उपस्थितपूर्वं प्रचुपितम्–उपस्थितप्रचुपितम् इद वृत्तम् उदित–कथित । कविभिरिति शेषः ॥ ९ ॥

भा० टी०–प्रथम चरणमें मगण ( ऽऽऽ ) सगण ( ।।ऽ ) जगण ( ।ऽ। ) भगण ( ऽ।। ) और २ गुरु ( दीर्घ ) वर्ण हो दूसरे चरणमें सगण ( ।।ऽ ) नगण ( ।।। ) जगण ( ।ऽ। ) रगण ( ऽ।ऽ ) और १ गुरु ( दीर्घ ) वर्ण हो तीसरे चरणमें २ नगण ( ।।। ) और १ सगण ( ।।ऽ ) हो । चौथे चरणमें ३ नगण ( ।।। ) १ जगण ( ।ऽ। ) और १ यगण ( ।ऽऽ ) हो तो " उपस्थितप्रचुपित " नामका छन्द हो ॥ ९ ॥

## उपस्थितप्रचुपित छन्दका उदाहरण ।

" रामा का सुकरेणुकामृगायतनेत्रा हृदयं हरति पयोधरविनम्रा ।
इयमतिशयसुभगा बहुविधनिधुवनकुशला ललिताङ्गी ॥ "

## प्रवर्धमानच्छन्दोलक्षणम् ।

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ ।
प्रथमांघ्रिकृतयतिः प्रवर्धमानम् ॥
त्रितयमपरमपि पूर्वसदृशमिह भवति ।
प्रततमतिभिरिति गदितं खलु वृत्तम् ॥ १० ॥

छ० टी०–अथ–पूर्वोक्तवृत्तानन्तरम् । यस्य तृतीयके पादे–तृतीयचरणे । नौ–द्वौ नगणौ । सनौ–पुनः सगणनगणौ । किंविशिष्टौ ? नसयुक्तौ–नश्च सश्च नसौ नसाभ्या नगणसगणाभ्यां युक्तौ समन्वितौ । भवतः तथा अपरं त्रितय–अन्यत्पादत्रय प्रथमद्वितीयचतुर्थात्मकम् । अपि इह–अस्मिन्वृत्ते शास्त्रे वा । पूर्वसदृशम्–उपस्थितप्रचुपितसमानं भवति तद्वृत्त–छन्दः । प्रततमतिभिः–विस्तृतधीभिः । खलु प्रवर्धमान गदितं–कथितम् । किंविशिष्टम् ? प्रथमांघ्रिकृतयतिः–प्रथमांघ्रिवच्चतुर्ष्वप्यंघ्रिषु कृता यतिर्विरतिर्यस्मिन् तत् ॥ १० ॥

भा० टी०—जिसके तीसरे चरणमें दो नगण (। । ।) फिर सगण (। । ऽ) फिर दो नगण (। । ।) और फिर सगण (। । ऽ) हो तथा शेष तीनो चरण (१-२-४ था) उपस्थितप्रचुपितके समान ही हो तो वह छन्द बुद्धिमानों-करके " प्रवर्धमान " नामका कहा गया है । यहां प्रथम चरणके समान सब चरणोंमें यति (विराम) होता है १० ॥

## प्रवर्धमान छन्दका उदाहरण ।

" बिम्बोष्ठी कठिनोन्नतस्तनावनताङ्गी हरिणीशिशुनयना नितम्बगुर्वी ।
मदकलकरिगमना परिणतशशिवदना जनयति मम मनसि सुखं मदिराक्षी"

## शुद्धविराडार्षभच्छन्दोलक्षणम् ।

**अस्मिन्नेव तृतीयपादके तजराः स्युः । प्रथमे च विरतिरार्षभं ब्रुवन्ति ॥**
**तच्छुद्धविराट्पुरःस्थितम् । त्रितयमपि यदि पूर्वसमं स्यात् ॥ ११ ॥**

छ० टी०—अस्मिन् एव—उपस्थितप्रचुपितवृत्ते । तृतीयपादके—तृतीयचरणे । तजराः—तगणजगणरगणाः स्युः । च—पुनः । त्रितयम्—अपरं पादत्रयम् । प्रथम-द्वितीयचतुर्थात्मकम् । अपि यदि पूर्वसमम्—उपस्थितप्रचुपिततुल्य स्यात्तथा थमे—प्रथमचरणे । विरतिस्तदा कवयः शुद्धविराट्पुरःस्थितं आर्षभ शुद्ध विराडार्षभ छन्दः । वदन्ति ॥ ११ ॥

भा० टी०—यदि उपस्थितप्रचुपित छन्दके तीसरे चरणमें तगण (ऽ ऽ ।) जगण (। ऽ ।) और रगण (ऽ । ऽ) हों शेष (१-२-४) तीनों चरण उप-स्थितप्रचुपितके समान ही हों तो कविलोग उसको " शुद्धविराडार्षभ " छन्द कहते हैं । इसमें प्रथमचरणमें यति होती है ॥ ११ ॥

## शुद्धविराडार्षभ छन्दका उदाहरण ।

" कन्येयं कनकोज्ज्वला मनोहरदीप्तिः । शशिनिर्म्मलवदना विशालनेत्रा
पीनोरुनितम्बशालिनी । सुखयति हृदयमतिशयं तरुणानाम् ॥ "

इत्युपस्थितप्रचुपितप्रकरणम् ॥

---

## गाथालक्षणम् ।

**विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।**
**यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥**

इति केदारभट्टकृते वृत्तरत्नाकरे विषमवृत्तकथने पञ्चमोऽध्यायः ॥

छ० टी०—यच्चोक्त प्रथमाध्याये शेष गाथास्त्रिभिष्षड्भिश्चरणैश्चोपलक्षिता स्तत्स्वरूपमाह—विषमेति । विषमाक्षरपादम्—विषमाणि न्यूनाधिकान्यक्षराणि येषु ते

विषमाक्षरास्तादृशाः पादाश्चरणा यस्मिन्तत् । यथाऽस्मिन्नेव मूलश्लोके । प्रथम-चरणेऽष्टावक्षराणि । द्वितीयचरणे दशाक्षराणि । तृतीये चरणे सप्ताक्षराणि । चतुर्थे चरणे च नवाक्षराणि । ह्येवं न्यूनाधिकाक्षरपादात्मकं । वा—अथवा । पादैः सर्वचरणैः । असमं—त्रिपाद षट्पाद वा । अनेन चतुश्चरणाभावत्वं सूचितम् । यच्छन्दः—वृत्तम् । अत्र नोक्तं—न गदित । तत्सूरिभिः—कविभिः । गाथा—गाथासञ्ज्ञक छन्दः प्रोक्तम् । किंवत् ? दशधर्मवत्—दशधर्मा विद्यन्ते यत्र तत् । यथा महाभारते दशधर्म न जानन्तीति गाथोदाहरणरूपं षट्पाद पद्य तच्चात्रोदाहरणे द्रष्टव्य प्राज्ञैः ॥ १२ ॥

भा० टी०—जिसका प्रत्येक चरण एककी अपेक्षा दूसरा कम या अधिक अक्षरवाला हो अथवा जिसके तीन या छः चरण हो जैसे महाभारतमें "दश-धर्मं न जानन्ती" यह ६ चरणका " गाथारूप " श्लोक कहा है इसके समान हो और जो इस छन्द शास्त्रमें नामनिर्देशसे नहीं कहा गया हो वह छन्दवेत्ताओंकरके " गाथा नामका " छन्द कहा गया है ॥१२ ॥

### गाथाका उदाहरण ।

"दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्॥मत्तः प्रमत्त उन्मत्तो शान्तः क्रुद्धो बुभुक्षितः ॥ त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ॥"

इति श्रीकविराजदाधीचपण्डित ज्ञारसरामशास्त्रिविरचितायां छन्दःसुबोधिन्यां सरलायां च विषमवृत्तकथन नाम पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ६ ।



### षट्प्रत्ययाः ।

**प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।**
**सङ्ख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥**

छ० टी०—अथोक्ताना वृत्तानां सप्रत्ययार्थं यथोक्तादिजातौ कति वृत्तरूपाणि भवन्तीत्यपेक्षायामुक्ताऽनुक्तवृत्तरूपप्रमापकान्षट्प्रस्तारादीनुद्दिशति । तत्र प्रस्तार इत्यय द्वारभूतः श्लोकः । १ प्रस्तारः । २ नष्टम् । ३ उद्दिष्टम् । ४ एक-द्व्यादिलगक्रिया । ५ संख्या । च—पुनः । ६ अध्वयोगः । एते षडेव प्रत्ययाः—प्रतीयते वृत्तमेभिरिति प्रत्ययाः छन्दोरूपदर्शकाः । स्मृताः पादपूरणे द्विती-योऽत्र च ॥ १ ॥

भा० टी०-इस ६ वी अध्यायमें पूर्वोक्त उक्तादि छन्दोंके कितने रूप होते हैं इस बातके स्पष्टीकरणके लिये प्रस्तार आदि छः प्रत्यय दिखलाये जाते हैं॥ १ प्रस्तार। २ नष्ट। ३ उद्दिष्ट। ४ एकद्व्यादिलगक्रिया। ५ संख्या और ६ अध्वयोग ये छः प्रत्यय ( छन्दोंके रूपादि वतलानेवाले द्वार ) हैं ॥ १॥

१ तत्रादौ प्रस्तारः।

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २ ॥
ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ३ ॥

छ० टी०-सर्वगुरौ-सर्वे गुरवो यस्मिन्नसौ सर्वगुरुस्तस्मिन्सर्वगुरौ । पादे-चरणे प्रथमपक्तौ कृते सति । आद्यात् गुरोः-प्रथमपक्तिस्थाद्याद्गुरोः । अधः-द्वितीयपक्तावधोभागे। लघु न्यस्य-स्थापयित्वा लिखित्वा। तदग्रे यथा उपरि-उपरिस्थितपक्तौ । तथा-तथैव । शेषं कुर्यात्-यद्युपरिस्थपक्तौ गुरुश्चेत्तदाऽधोपि गुरुर्यदा लघुश्चेत्तदाधोऽपि लघुरेव लिखेत्। भूय'-पुनरप्यग्रे । अमु विधिं-द्वितीयपक्तिस्थादाद्याद्गुरोरधो लघुनिक्षेपरूप विधि कुर्यात्। अयमाशयः=द्वितीयपंक्तौ प्रथममेकलघुत्वेऽपि तदन्ते यो गुरुः स एवात्रादिभूतो मन्तव्यः। स्पष्टमेतदुदाहरणेषु ॥ २ ॥ ऊने-उक्तप्रकारेण तृतीयपक्तौ गुरोरधः स्थितस्य लघोर्यत्पूर्वं पाश्चात्य स्थान तदून तस्मिन् ऊनस्थाने । गुरून् एव दद्यात्-यावन्तश्चोपरि लघवस्तावन्तोऽधःपंक्तावूनस्थाने गुरवः कार्याः। एवम्--अमुना प्रकारेण । सर्वलघुः--सर्वे लघवो यत्र स सवलघुः सर्वलघुरूपः पादः । यावद्भवेत्तावदय विधिः कायः । छन्दोविचितिवेदिभिः--विशेषेण चितिर्विचितिर्ज्ञानं छन्दसा विचितिः छन्दोविचितिस्ता विदन्तीति छन्दोविचितिवेदिनस्तैश्छन्दोविवेकविद्भि' पण्डितैः । अयं प्रस्तारः--प्रस्तार्यत इति प्रस्तारो वर्णविस्तारन्यासः। समाख्यातः-कथितः ३॥

भा० टी०-१ प्रस्तार। पूर्व कही हुई उक्त आदि जातिमें छन्दोंके जितने २ भेद होते हैं उनके रूपोंको पृथक् २ करके दिखलानेवाली क्रिया ( विधि ) को प्रस्तार कहते हैं॥

प्रस्तार वनानेकी विधि इस प्रकार जानो। उक्त आदि जातिमें जिस जातिके छन्दका प्रस्तार वनाना हो पहिले उस जातिको देखो कि वह

कितने अक्षरके पादवाली है वह जितने अक्षरके पादवाली हो उतने ही अक्षरोंको गुरु ( ऽ ) रूपसे पहली पंक्तीमें लिखो इसीको पहला रूप जानो। फिर पहली पंक्तिमें जो पहला रूप लिख चुके हो उस रूपमें जो आद्य ( पहला ) गुरु ( ऽ ) है उसीके नीचे दूसरी पंक्तिमें १ लघु ( । ) लिखकर उसके आगे ऊपरवाली १ ली पंक्तिमें गुरु या लघु जो हों वह ज्योंके त्यो लिख दो यह दूसरा रूप जानो ॥ इस दूसरे रूपके आदिमें लघु ( । )और दूसरा गुरु ( ऽ ) सदा रहता है इसलिये तीसरे रूपको बनानेके समय दूसरी पक्तिमें दूसरे रूपमें जो पहले लघूके आगे २ रा गुरू है उसीको आद्य गुरु मानो और उसीके नीचे तीसरी पंक्तिमें लघु ( । ) लिखकर फिर ऊपरकी २ री पंक्तिमें लघु या गुरु जो हों वह ज्योंके त्यो लिख दो अब इस ३ रे रूपमें २ री पंक्तिके २ रे गुरूके नीचे ३ रे पंक्तिमें जो लघु ( । ) लिखा गया है उससे पहले जो खाली ( अपूर्ण ) स्थान है उसीको "ऊनस्थान" कहते हैं। इस ऊनस्थानमें सदा गुरु ही लिखना चाहिये अतः गुरु ( ऽ ) लिखकर इसे पूणकरलो यह तीसरा रूप बन गया। इसी रीतिके अनुसार इस क्रियाको वहांतक करते जावो कि जहां तक सब लघु ही लघुका अन्तिम रूप बन जावे। छन्दशास्त्रके वेत्ताओंकरके यह " प्रस्तार " कहा गया है ॥ २-३ ॥

## इसका उदाहरण देखो-

जैसे "मध्या" जातिमें छन्दोंके कितने भेद और कैसे २ रूप बनते हैं इस बातके जाननेके अर्थ जब प्रस्तार बताते हो तो देखो मध्या ( ३ अक्षरके पादवाली ) जाति है अतः पहली पंक्तिमें तीन गुरु ऽ ऽ ऽ लिखो यही १ ला रूप बन गया। अब दूसरा रूप बनानेकेलिये पहली पंक्तिमें पहले रूपमें ३ गुरुवोंमेंसे जो १ ला गुरु है उसीके नीचे दूसरी पंक्तिमें १ लघु (।) लिखकर उसके आगे ऊपरकी १ ली पंक्तिमें पहले रूपमेंके जो शेष २ गुरू हैं उन्हें २ रे रूपमें भी ऽ ऽ ज्योंके त्यों लिख दो तो यह। ऽ ऽ दूसरा रूप बनगया, अब ३ रा रूप बनानेकेलिये देखो दूसरे रूपके आदिमें १ लघु (।) और २ रा तथा ३ रा ये दो गुरु हैं तो २ रे गुरुको ही आद्य गुरु मानकर उसीके नीचे ३ री पंक्तिमें १ लघु (।) लिखकर उसके आगे २ रे रूपका जो ३ रा गुरु शेष है उसे ज्योंका त्यों लिख दो तो । ऽ ऐसा रूप बना अब इस ३ री पंक्तिमें लिखे हुए लघुसे पहले जो खाली स्थान पडा है वही ऊनस्थान है वहां गुरु लिख दो तो यह ३ रा ऽ । ऽ रूप बन गया यही क्रिया ( विधि ) अन्तका ८ वा भेद सर्व लघुरूप आनेतक करो। बस इसीरीतिके अनुसार तुम चाहे जिस जातिका प्रस्तार बनाना चाहोगे उसी जातिका प्रस्तार बना सकोगे।

सूचनाः-विद्यार्थियोंके सुबोधार्थ १ अक्षरके पादजाती (उक्ता) से लेकर चार अक्षरकी पादजती ( प्रतिष्ठा ) पर्यन्तका प्रस्तार लिखा जाता है॥

अथ प्रस्तारचक्रम् ।

| पंक्ति | १ उक्तामें | रूपभेद | पंक्ति | २ अत्युक्तामें | रूपभेद | पंक्ति | ३ मध्यामें | रूपभेद | पंक्ति | ४ प्रतिष्ठामें | रूपभेद |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ऽ | पहिला | १ | ऽऽ | १ ला | १ | ऽऽऽ | १ ला | १ | ऽऽऽऽ | १ ला |
| २ | । | दूसरा | २ | ।ऽ | २ रा | २ | ।ऽऽ | २ रा | २ | ।ऽऽऽ | २ रा |
| | | | ३ | ऽ। | ३ रा | ३ | ऽ।ऽ | ३ रा | ३ | ऽ।ऽऽ | ३ रा |
| | | | ४ | ।। | ४ था | ४ | ।।ऽ | ४ था | ४ | ।।ऽऽ | ४ था |
| | | | | | | ५ | ऽऽ। | ५ वां | ५ | ऽऽ।ऽ | ५ वां |
| | | | | | | ६ | ।ऽ। | ६ वां | ६ | ।ऽ।ऽ | ६ वां |
| | | | | | | ७ | ऽ।। | ७ वां | ७ | ऽ।।ऽ | ७ वां |
| | | | | | | ८ | ।।। | ८ वां | ८ | ।।।ऽ | ८ वां |
| | | | | | | | | | ९ | ऽऽऽ। | ९ वां |
| | | | | | | | | | १० | ।ऽऽ। | १० वां |
| | | | | | | | | | ११ | ऽ।ऽ। | ११ वां |
| | | | | | | | | | १२ | ।।ऽ। | १२ वां |
| | | | | | | | | | १३ | ऽऽ।। | १३ वां |
| | | | | | | | | | १४ | ।ऽ।। | १४ वां |
| | | | | | | | | | १५ | ऽ।।। | १५ वां |
| | | | | | | | | | १६ | ।।।। | १६ वां |

१ इति प्रस्तारः ॥

## २ नष्टम् ।

नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे चलः ।
विषमे चैकमाधाय तस्यार्धेऽर्धे गुरुर्भवेत् ॥ ४ ॥

छ० टी०—यस्यां कस्याञ्चिदपि जातौ नष्टस्य—वृत्तनष्टरूपस्य । यः अङ्कः सः समे—द्विचतुःषडष्टादिसंख्यागते सति । तस्य—समसंख्यागतस्याङ्कस्य । च—पुनः । अर्धेऽर्धे—अर्धभागे कृते सति । लः भवेत्—लघुर्लभ्यते । च—ऽपुनः । तस्य—नष्टरूपस्याङ्कस्य।यदि विषमे—एकत्रिपञ्चसप्तनवैकादशसंख्यागते सति । एकम्—एकमङ्कम् । आधाय—तन्मध्ये निक्षिप्य संयोजयित्वेत्यर्थः । अर्धेऽर्धे—अर्धभागे कृते सति । गुरुर्भवेत्—गुरुर्लभ्यते । भूयो भूयोऽत्र क्रियाकरणार्थं वीप्सातोऽर्धेऽर्धे द्वित्वेऽपि दोषाऽभावो ज्ञेयः । सर्वञ्चोदाहरणे स्पष्टमिदं द्रष्टव्यम् ॥ ४ ॥

भा० टी०—२ नष्ट । प्रस्तारको हम भली भांती समझा चुके । अब इस नष्टको भी समझो बिना प्रस्तारके बनाये ही चाहे जिस जातिमें अमुक संख्याका रूप कैसा बनता है यह जिसके द्वारा जाना जाय उसे " नष्ट " कहते हैं ॥

नष्टके बनानेकी क्रिया इस प्रकार है । उक्ता आदि जिस किसी भी जातिमें छन्दका नष्ट रूप पूछा जावे कि अमुक संख्यावाला रूप कैसा है ? तब पहले इस बातको जानना चाहिये कि नष्टरूपकी संख्या अंक समसंख्या ( दो चार छः आठ आदि ) में है या विषमसंख्या ( एक, तीन, पांच, सात, नव, ग्यारह आदि ) में है । जो वह नष्टरूपका अंक समसंख्यामें हो तो उस समसंख्याके अंकको आधा करो और समसंख्याके अंकसे लघु लिया जाता है अतः १ लघु (।) लेवो । पुनः उस समसंख्याके आधे किये हुए अंकको देखो जो वह फिर भी समसंख्यामें आया हो तो उसे आधा करो और फिर भी १ लघु (।) लेवो इस प्रकार समसंख्यामें आनेसे सर्वदा लघु ही लेना चाहिये । और जो वह नष्टरूपके संख्याका अंक विषमसंख्या ( १ ३ ५ ७ ९ ११ ) में हो तो उसमें एक और मिलाकर सम बना लो क्योंकि विषमसंख्याका अंक आधा नहीं होसकता अतएव एक मिलाकर ही आधा करो आधाकरनेपर विषमसंख्याके अंकसे गुरु (ऽ) लिया जाता है अतः १ गुरु (ऽ) लेवो । पुनः उस विषम संख्याके आधे किये हुए अंकको देखो जो वह फिर भी विषम संख्यामें ही आया हो तो उसमें फिर १ मिलाकर आधा करो और फिर भी गुरु (ऽ) लेवो । इस प्रकार विषमसंख्यामें आनेसे सर्वदा गुरु और समसंख्यामें

आनेसे उसे आधा करके (लघु।)लेते जाओ। इस रीतिके अनुसार जहांतक नष्टरूप न बने तहांतक इस क्रियाको किये जाओ "नष्टरूप"बन जावेगा॥

नष्टका उदाहरण—जैसे पूछा जावे कि ३ अक्षरकी (मध्या) जातिमें छन्दका नष्टरूप चौथा कैसा है? तो यहां नष्टरूपकी संख्याका ४ चौथा अंक समसंख्यामें है इसको आधा किया तो (२) दो हुए समसंख्याके अंकसे लघु (।) लिया जाता है अतः पहला १ लघु ही (।) लिखो॥ अब उस चारके आधे (२) दो किये हुएको देखा जाय तो यह भी समसंख्यामें ही है अतः इस दोका आधा (१) करो और यह दो समसंख्यामें होनेके कारण फिर दूसरा भी लघु (।) ही लिखो। अब दो (२) का आधा किया हुआ एक (१) यह विषमसंख्यामें है और विषमसंख्याका अंक आधा हो नहीं सकता अतः इस एक(१)में एक (१) और मिलाओ तो दो (२) हुए इसका आधा करनेसे एक हुआ अब इस एकसे कोई प्रयोजन नही किंतु जिस एकमें तुमने एक मिलाया वह एक(१)विषमसंख्यामें होनेके कारण विषमसंख्याके अंकसे गुरु ही लिया जाता है अतः तुम पहले लिखे हुए२लघु (।।) के आगे ३ रा गुरु (ऽ) और लिख दो तो दो लघु और एक गुरुका ऐसा (।।ऽ) रूप बन गया यही रूप ३ अक्षरकी (मध्या) जातिमें पूछे छन्दका नष्टरूप है॥ ४॥

इति नष्टम्॥

---

## ३ उद्दिष्टम्।

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत्।
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत्॥ ५॥

छ० टी०--वृत्तस्य गुरुलघू प्रस्तार्य कतिसख्याङ्कमेतद्वृत्तमित्युद्देशविषयत्वादन्वर्थ नाम यदुद्दिष्टमिति तत्करणप्रकारस्त्वस्त्ययम्—

आद्यात्—उद्दिष्टा गुरुलघुरूपा यावन्तोऽक्षरास्तेष्वाद्याक्षरात् आरम्य। उपरि—आद्याक्षरस्यैवोपरि तच्छिरसि। द्विगुणान् अङ्कान्—यथाद्याक्षरोपर्येक द्वितीयाक्षरोपरि द्विक तृतीयाक्षरोपरि चतुर्थ चतुर्थाक्षरोपर्यष्टम पञ्चमाक्षरोपरि षोडश षष्ठाक्षरोपरि द्वात्रिंशत्तमेवमन्त्याक्षरपर्यन्त द्विगुणिताङ्कान्। समालिखेत्—सम्यक्प्रकारेण लिखेत्। तत्र—तेष्वङ्केषु। ये—यावन्तः। लघुस्थाः—लघुवर्णाना लव्वक्षराणामुपरिस्थिताः। अङ्का--पूर्वस्मात्पूर्वस्मादग्रेऽग्रे द्विगुणितसंख्याङ्काः।

तैः–सर्वैर्लघ्वक्षरोपरि स्थितैरङ्कैः । मिश्रितैः–परस्परसंमिश्रितैरेकीकृतैः।सैकैः–पुनश्चैकेन सहितैः । जातं यावत्संख्याङ्कं तावत्संख्योन्मित वृत्तरूपमुदिष्टं भवेत् ॥५॥

भा० टी०–अब उद्दिष्टका वर्णन करते हैं। नष्टमें वृत्तके रूपकी संख्याका अंक बतलाकर वृत्तका नष्टरूप पूछा जाता है और उद्दिष्टमें वृत्तका रूप बतलाकर उसीकी संख्या पूछी जाती है अर्थात् यह नष्टका विपरीत है ॥ जैसे किसी वृत्तके गुरु लघुओंसे बने हुए रूपको लिखकर पूछे कि, यह वृत्तरूप कितनी संख्यावाली है ? बस उसी संख्याको बतलानेवाली क्रियाका नाम "उद्दिष्ट" है ॥

उद्दिष्टके बनानेकी क्रिया इस प्रकार है। किसी भी वृत्तका लघु गुरुओंसे बना हुआ जो रूप लिखा गया है उस रूपका पहला अक्षर गुरु या लघु जो हो उसके शिरपर (१) एक, दूसरेपर (२) दो, तीसरेपर (४) चार, चौथेपर (८) आठ, पांचवेंपर (१६) सोलह, छठवेंपर (३२) बत्तीस । इसप्रकार अंत ही अंतके अक्षरतक उनके शिरपर दूनी दूनी संख्याके अंक लिखो फिर उन लिखे हुए संख्याके अंकोंमेंसे लघु लघु अक्षरोंपर जितनी जितनी संख्याके अंक हो उन सबोंको जोडकर उसमें एक और मिला दो अब देखो कि सब मिलकर कितनी संख्या हुई, बस जो संख्या आवे वही वृत्तका उद्दिष्ट रूप है ॥

उद्दिष्टका उदाहरण–जैसे वृत्तका रूप ।।ऽ। (१ २ ४ ८) ये हैं इसे लिखकर पूछा जाता है कि यह वृत्त कितनी संख्याका है ?

अब इस रूपके पहले लघु (।) पर एक (१) दूसरे लघु (।) पर दो (२) तीसरे गुरु (ऽ) पर चार (४) और अंत ही अंतके चौथे लघु (।) पर आठ (८) ये एकसे एक आगे दूनी दूनी संख्याके अंक लिखे गये हैं। इन लिखे हुए संख्याके अंकोंमेंसे लघु लघु अक्षरोंपर १–२–८ ये संख्याके अंक हैं। इन सबको जोडनेसे ११ हुए इसमें १ और मिलानेसे १२ हुए बस जानले कि यही वृत्तका १२ वां रूप है ॥ ५ ॥

इत्युद्दिष्टम् ॥

---

### ४ एकद्व्यादिलगक्रिया ।

वर्णान्वृत्तभवान्सैकानुत्तरानूर्ध्वतः स्थितान् । एकादिक्रमशश्चैतानुपर्युपरि निक्षिपेत् ॥ ६ ॥ उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः । उपर्याद्याद्गुरोरेवमेकद्व्यादिलगक्रिया ॥ ७ ॥

छ० टी०–वृत्तभवान्वर्णान्–वृत्ते छन्दसि भव उत्पत्तिर्येषां ते वृत्तभवास्तान्

वृत्तैकपादस्थितवर्णसंख्यासमानानैकानित्यर्थः।वर्णशब्दोऽत्र सख्यासकेतार्थे ज्ञेयः । किंविशिष्टान् ? सैकान्--एकेन सहितास्सैकास्तान् वृत्तवर्णसख्यैकाधिकान् । पुनः किंविशिष्टान् ? ऊर्ध्वतः--उपरितः । उत्तरान्स्थितान्--एकपङ्क्तावेवोत्तरोत्तरक्रमेण स्थापितान् । च--पुनः । एतान्सर्वान् एकादिक्रमशः--एकमादौ कृत्वा क्रमात् । उपरि उपरि--उपर्युपर्यङ्के । निक्षिपेत्--युञ्ज्यात् ॥ ६ ॥ उपान्त्यतः--अन्त्याङ्कसमीपात् । निवर्तेत--योगक्रिया न कार्या । किंकुर्वन्? एक एक--एकमेकमङ्कम् । उपरि--उपरितनस्थाने । त्यजन्--स्थापयन्सन् । एवम् ऊर्ध्वतः--उपरित आद्याद्--वामगत्यादिभूतादाद्यात् । गुरोर्गुरुरूपदर्शिका अवस्ताच्च लघोर्लघुरूपदर्शिका लगक्रिया भवति ॥ ७ ॥

भा० टी०--जिस क्रियासे छन्दके प्रत्येक रूप जितने जितने लघु और गुरुके हो वे जाने जावे उस क्रियाको एकद्व्यादिलगक्रिया कहते है ।

विधिः--छन्दके एक चरणमें जितने अक्षर हों उनमें एक संख्या मिला कर खड़ी पंक्तिमें उतने एक ( १ ) लिखो, अर्थात् तीन अक्षरके चरणमें ४ (एक) चारमें ५ और ५ में ६ एक लिखो यहां ३ अक्षरके चरणका विधान वतलाते हैं। प्रथम क ख ग और एक अधिक संख्याका "घ" इस प्रकार चार एक खडी पंक्तिमें लिखे गये । अब खके १ को ऊपरके क के १ में मिलाओ मिलानेसे २ हुए यह २ संख्या खकी संख्या १ के दक्षिण भागमें दूसरी पंक्तिमें लिखो । अब २ संख्यामें गकी १संख्याको मिलाओ इस प्रकार ३ हुए इसे २ री पंक्तिकी संख्या २ के नीचे लिखो । अब ग के सामने दूसरी पक्तिकी संख्या ३ को घकी संख्या १ में नही मिलासकते कारण यह उपान्त्य है । यहींसे योगक्रियाको बन्द करो और घके इस एकको दूसरी पंक्तिके आदिमें कके दाहिनी ओर द्वितीय खडी पंक्तिके शीर्षकमें १ लिख दो । यह दूसरी पंक्तिका कार्य हो चुका । अब दूसरे पंक्तिकी २ संख्याको इसी पंक्तिके ऊपरकी संख्या १ में मिलाओ मिलानेसे ३ हुए । इस ३ को खकी तीसरी खडी पंक्तिमें लिखो अब इस तीसरी पंक्तिके ३ की दूसरी पंक्तिके तीनमें नही मिला सकते कारण यह उपान्त्य है इस हेतु योगक्रियाको बन्द करो और तीसरी पंक्तिके शीर्षकमें एक भर दो । तीसरी पंक्तिका

| तीन अक्षरका चरण | | | | |
|---|---|---|---|---|
| क | १ | १ | १ | १ |
| ख | १ | २ | ३ | |
| ग. | १ | ३ | | |
| घ. | १ | | | |

२ स्वयं उपान्त्य है इस हेतु चौथी पंक्तिके अन्तमें दाहिनी ओर ककी चौथी संख्या एकको लिखकर क्रियाको बंद करो कारण यह छन्द २ अक्षरके चरणका है।

इस प्रकार ऊपरकी आडी पंक्तिमें जो चौथा एक है उसे आद्यंक मानकर उसीसे आरंभ करो। वह एक अंक छन्दके रूपका और उसके पीछेके अंक ऊपरसे गुरुकी और नीचेसे लघुकी संख्याको बतलानेवाले जानो। जैसे इस ३ अक्षरवाले छन्दमें ऊपरसे देखो तो एक रूप ३ गुरुका तीन रूप २ गुरुके, फिर ३ रूप १ गुरुके और १ रूप अन्तका सर्व (३) लघुका होगा। इसी प्रकार नीचेसे देखोगे तो १ रूप अन्तका सर्व (३) लघुका ३ रूप २ लघुके, ३ रूप १ लघुके और १ ऊपरका रूप सर्व (३) गुरुका होगा ॥ ६-७ ॥

इत्येकद्व्यादिलगक्रिया ॥

---

## ५ संख्या ।

लगक्रियाङ्कसन्दोहे भवेत्संख्या विमिश्रिते ।
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ८ ॥

छ० टी०—लगक्रियाङ्कसन्दोहे--एकद्व्यादिलगक्रियाया येऽङ्कास्तेषां समूहे । विमिश्रिते--एकत्र समिलिते । संख्या--वृत्तरूपसंख्या भवेत् । यद्वा--उद्दिष्टाङ्कसमाहारः--उद्दिष्टवृत्तवर्णानां मस्तके संस्थापिताङ्कानामेकीभावः । सैकः--पुनरेकसहितः । इमां--वृत्तरूपसंख्याम् जनयेत् ॥ ८ ॥

भा० टी०—५ संख्या। जिससे विनाप्रस्तार बनाये ही छन्दके रूपोंकी संख्याका ज्ञान हो जावे कि इस छन्दके कुल इतने रूप होवेंगे इसीको "संख्या" कहते हैं। इसकी क्रिया इस प्रकार जानो। एकद्व्यादिलगक्रियाके रूपदिखलानेवाले जितने अंक आये हो उन सबोंको जोडलो बस यही छन्दके रूपोंकी संख्या होगी। अथवा उद्दिष्टमें छन्दके वर्णोंपर लिखे हुए अंकोंको जोडकर उसमें एक (१) और मिलाओ यही छन्दके रूपोंकी संख्या होगी ॥ ८ ॥

संख्याका उदाहरणः—जैसे प्रतिष्ठा (४ अक्षरके पादवाली जाति) में एकद्व्यादिलगक्रियाके रूप दिखलानेवाले ये अंक १-४-६-४ और १ आये हैं इन सबोंको जोडनेसे सोलह (१६) हुए बस जान लेवो कि ४ अक्षरके चरणवाले छन्दके १६ रूप भेद है।

संख्याका २रा उदाहरणः–अथवा उद्दिष्टमें छन्दके इस रूपमयी
१२४८
(।।ऽ।) वर्णोंपर १–२–४ और ८ ये अंक लिखे हैं इन सबोंको जोडनेसे पंदरह (१५) हुए इसमें १ और मिला दिया गया तो सोलह (१६) संख्या हुई, बस जान लेवो कि ४ वर्णके चरणवाले छन्दके रूप भेद १६ है॥

इति सख्या ॥

---

## ६ अध्वयोगः।

**संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः।**
**वृत्तस्यांगुलिकां व्याप्तिमधःकुर्यात्तथांगुलम् ॥ ९ ॥**

**छ० टी०**–सख्या–यस्य कस्यापि वृत्तस्य पूर्वोक्तप्रकारेण या समागता सख्या। सैव–द्विगुणा–द्विगुणीकृता। एकोना–पुनश्चैकेन ऊना। सद्भिः–कोविदैः। अध्वा–अध्वयोगो वृत्तस्थानपन्थाः कथितः। स्थापनाप्रकारस्त्वेवमस्य–वृत्तस्य–वृत्तरूपस्य। अगुलिकाम्–एकागुलपरिमिताम्। व्याप्ति–व्याप्तिस्थानभूमिम्। अथ–वृत्तैकरूपलेखनानन्तरम्। अधः–तदधः। अगुलम्–एकागुलिपरिमाणान्तराल च कुर्यात्। तेन प्रस्तारे वृत्तरूपाणा परस्परमेलनं न भवेदिदमधऊर्ध्व प्रमाण ज्ञेय नतु दीर्घतायाः ॥ ९ ॥

**भा० टी०**–६ अध्वयोग। वृत्तके रूपोंको स्थापन जितने अंगुलकी संख्याके स्थानमें हो जाय उतने अंगुलकी संख्याको वतलानेवाली क्रियाको "अध्वयोग" कहते हैं।

जिस किसी वृत्तका अध्वयोग बनाना हो उस वृत्तके रूपोंकी आई हुई संख्याको दूनी करके उसमें १ घटा देवो शेष बची हुई संख्याके समानही अंगुल संख्या जानो अर्थात् उतने ही अंगुल प्रमाणके स्थानमें वृत्तके रूप स्थापन हो सकेंगे।

इसके स्थापनका प्रकार यो है–वृत्तके एक रूपको १ अंगुल प्रमाणके स्थानमें लिखो और उसके नीचे एक (१) अंगुलका अंतर छोडकर दूसरा रूप लिखो एवं जितने रूप हों एक एक अंगुलके अंतरसे लिखते जाओ कि जिससे वृत्तके रूप आपसमें न मिल सकें और अध्वयोगसे निकाली हुई अंगुलोंकी संख्या ठीक पूरी हो जाय। यह प्रमाण वृत्तरूपोंके नीचे ऊपर लिखनेका जानो न कि लंबाईका ॥ ९ ॥

अध्वयोगका उदाहरण–जैसे ४ अक्षरकी (प्रतिष्ठा) जातिमें वृत्तके रूपोंकी आई हुई सोलह (१६) संख्याको दूनी की तो ३२ हुए इसमें

एक ( १ ) घटानेसे एकतीस ( ३१ ) रहे यही संख्या अंगुलोकी जानो अर्थात् ( ३१ ) अंगुलमें वृत्तके ( १६ ) रूपोका स्थापन होगा । जैसे १६ रूपोंके स्थानमें १६ अंगुल और १६ रूपोके मध्य मध्यके अंतरमें १५ अंगुल एवं ३१ अंगुलका " अध्वयोग " जानो ॥

इत्यध्वयोगः ।

---

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्वेकनामा विमलतरमतिर्वेदतत्त्वावबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-
श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥१०॥

इति श्रीकेदारभट्टकृते वृत्तरत्नाकरे प्रस्तारादिनिरूपणे षष्ठोऽध्यायः ॥

छ० टी०—वंशेऽभूदिति । कश्यपस्य—कशधातोः " नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ । " इत्यच् " अजाद्यतष्टाप् । ४ । १ । ४ " इति टाप् तदा कशा भवति । कशति शब्दायते ताडयतीति कशा । " अश्वादेस्ताडिनी कशा " इत्यमरः । कशाशब्दस्य दण्डादिगणे पाठात् " दण्डादिभ्यो यः । ५ । १ । ६६ ।" इति यस्तदा कश्यशब्दो भवति । कशामर्हति यः स कश्यः । " कश्यस्त्रिषु कशार्हे स्यात् " इति विश्वः ।" कश्यः कशार्हे " इत्यमरः । कश्याः कशार्हाः कशाघातयोग्याः कामक्रोधलोभादयोऽरयस्तान्पिबति जयति शोषयति नाशयति य. स " कश्यपः " कामादिशत्रुजेता मुनिः । तदुक्तं गीतायाम् "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ । पाप्मान प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् । ४१ ॥" भ. गी. अ. ३ । अतएवास्य नामनिरुक्तिर्यथा मार्कण्डेयपुराणे—" ब्रह्मणस्तनयो योऽभून्मरीचिरिति विश्रुतः । कश्यपस्तस्य पुत्रोऽभूत्कश्यपानात्स कश्यपः ॥ " कश्यानां कामक्रोधादीनां पानादित्यर्थः । यद्वा कश्य ताडनार्हमपि पाति रक्षत्यवतीति कश्यपः । कृपालुरित्यर्थः । केनचिन्मन्वादिधर्मशास्त्रानभिज्ञेन ज्ञेनाप्यज्ञेनेव " कश्य मद्य पिबतीति कश्यपः " इति यत्कृत व्याख्यान तन्नादरणीयम्, धर्मशास्त्रविरुद्धत्वात् । धर्मशास्त्रे हि ब्राह्मणानां मद्यपानस्य सर्वथा निषेधात् । तदुक्तं भगवता मनुना—" यक्षरक्षःपिशाचान्नं मद्यं मांसं

सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ " म. अ. ११ श्लो० ९९ । तथाच निघण्टौ सप्तपञ्चाशद्वाङ्नामसु ११ वाणी, १९ भारती, २१ सरस्वती, ४२ कशा चैतच्छब्दाना वाक्यपर्यायत्वात् वाक् कशा इत्युच्यते । पुनरपि निघण्टौ " अश्वाजनी " १९ शब्दस्य निरुक्ते–अश्वाजनी कशेत्याहुः । कशा प्रकाशयति भयमश्वाय । कृष्यतेर्वाणुभावात् । वाक्पुनः प्रकाशयत्यर्थान् । अ. ९. ख. १९. । इति प्रधानभूतस्य निघण्टुकोशस्य प्रमाणादत्र कशाशब्देन वाग्ग्रहण भवति । कशां, वाणीं, वाच, सरस्वतीं वाऽर्हन्तीति कश्याः ।सुरासुरनरादयस्तान् पाति रक्षत्यवतीति कश्यपस्तस्य कश्यपस्य कामादिजेतुः प्रजागोप्तुर्यागिनो वंशे अन्वये पव्वेकनामा विप्रो–ब्राह्मणोऽभूत् । तस्य सूनुस्तदात्मजः केदारोऽभूत् । तेन अभिरामम्–अभितो रमन्तेऽस्मिन्कवयस्तदभिराम लक्ष्यलक्षणसयुतत्वान्मनोरम वृत्तरत्नाकराख्यं–वृत्तान्येव रत्नानि वृत्तरत्नानि वृत्तरत्नानामाकरः वृत्तरत्नाकरः सा अख्या यस्य तत् वृत्तरत्नाकरनामधेयम् । इद छन्दश्छन्दःशास्त्र प्रविरचित निर्मितम् । किंभूतः पव्वेकनामा ? प्रकटगुणगणः–प्रकटाः प्रख्याता गुणाना शीलसन्तोषादिसद्गुणानां गणाः समूहाः यस्य सः । पुनः किंभूतः ? शैवसिद्धान्तवेत्ता--शिवो देवता येषां ते शैवाः सिद्धोऽन्तो निश्चयो यास्मिन् स सिद्धान्तः शैवाना सिद्धान्तः शैवसिद्धान्तस्त वेत्तीति । पुनः किंभूत. ? विमलतरमतिः--अतिशयेन विमला इति विमलतरा विमलतरा मतिर्यस्य सः । कस्मिन् ? वेदतत्त्वावबोधे–वेदाना तत्त्वावबोधे वेदतत्त्वज्ञाने । किंभूतः केदारः शिवचरणयुगाराधनैकाग्रचित्तः–शिवस्य शम्भोश्चरणयोर्युग युगल तदाराधने एकाग्रं चित्त मनो यस्य । " युग्म तु युगलं युगम् " इत्यमरः ॥ १ ॥

**भा० टी०–"कश्यपस्य"–कामक्रोधादि शत्रुओंको जीतनेवाले मुनिके वंशमें शील संतोष आदि श्रेष्ठ गुण संपन्न, शैव सिद्धान्तके ज्ञाता और वेदोंके तत्त्ववेत्ता "पव्व" नामक एक ब्राह्मण हुए जिनके पुत्र शिवभक्त श्रीकेदारभट्टजी द्वारा यह सुन्दर वृत्तरत्नाकर नामक छन्दोग्रन्थ रचा गया ॥१०॥**

इति श्रीकविराजदाधीचपण्डित ज्ञारसरामशास्त्रिविरचिताया

छन्दःसुबोधिन्या सरलाया च प्रस्तारादिनिरूपणं

नाम षष्ठोऽध्यायः ॥

## टीकाकर्तुर्वंशादिबोधः श्लोकः ।

योगीन्द्रामरवन्दितस्य विमले श्रीमद्दधीचोऽन्वये ।
विप्रः श्रीवलदेवसूरिरभवत्तत्सूनुना सम्मुदे ॥
श्रीमज्ज्ञारसरामशास्त्रिभिषजा साहित्यविद्यावतां ।
टीका वृत्तसुबोधिनी च सरला छन्दोविदा निर्म्मिता ॥ १ ॥
नेत्रौँश्वाङ्कविधावब्दे[१९७३] माघे राकातिथावभूत् ॥
कृतिर्ज्ञारसरामस्य पूर्णेय कविकामदा ॥ २ ॥

इति वृत्तरत्नाकरः टीकाद्वयोपेतः समाप्तः ।

---

१ हर्षाय ।




## पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण-मुंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस,
खेतवाडी-मुंबई.


कृत
पानस्य
द्यं मांस